निगुरुः कुत्र वर्त्तते इति प्रश्ने, गुरुत्रयं ऽऽऽ लिखित्वा तत्र पूर्व्व-
युगलसदृशाङ्को देयः। तत्र च पूर्व्वाभावे कथं पूर्व्वयुगलसदृशत्वम्,
अतः प्रथमतः कश्चिदङ्को देयः, स च प्रथमोपस्थितत्वादेकाङ्क एव,

| |
|---|
| १ |
| ऽ |
| २ |

तस्य च वृद्ध्याकर्षणाद्युगलत्वं सम्पाद्य द्वयाङ्को लेख्यः, तत्र च
गुरोर्द्विमात्रत्वादुपर्य्यधश्चाङ्को देयः, लघोरेकमात्रत्वादुपर्य्येव,

| | |
|---|---|
| १ | ३ |
| ऽ | ऽ |
| २ | ५ |

तेन च [?] ततश्च एको द्वाविति मिलित्वा त्रयं द्वितीय-
गुरो[रु]परि देयं, द्वयं त्रयमिति मिलित्वा पञ्चाङ्कस्तदधो
देयः, तेन १, २, ३, ५, ततः पञ्च त्रयमिति मिलित्वा-
ष्टाङ्कस्तृतीयगुरोरुपरि देयः, १, २, ३, ५, ८, पञ्चा-

| | | |
|---|---|---|
| १ | ३ | ८ |
| ऽ | ऽ | ऽ |
| २ | ५ | १३ |

ष्टाविति मिलित्वा त्रयोदशाङ्कस्तदधो देयः। तथाच १, २, ३, ५, ८,
१३ पूर्व्वयुगले सदृशाङ्कदानवृत्तं, ततश्च गुरुशिरःस्थिताङ्कानेकीकृत्य
शेषाङ्कात्तेऽङ्का दूरीकरणीया भवन्ति। अ[त्र] गुरुशिरोऽङ्का एक-
स्त्रयमष्टाविति मिलित्वा द्वादश, शेषाङ्कश्च त्रयोदश, इत्थं त्रयो-
दशे द्वादशदूरीकरणे एकस्यावशिष्टत्वात् प्रथमत एव त्रिगुरुर्गण इति
लभ्यते। इदञ्च बोध्यम् — अन्तिमो योऽङ्कः तावत्संख्यः प्रस्तारो भवति,
तेन षट्कलस्य त्रयोदशभेदः प्रस्तार इति बोध्यम्। एवं सुख-
बोधाय स्थलान्तरमपि दर्श्यते — षट्कलप्रस्तारे आदावन्ते च गुरुर्मध्ये
लघुद्वयमेवं कुत्र वर्त्तते इति प्रश्ने, पूर्ववद्गुरोरुपरि
एकाङ्कः १, द्वयाङ्कः २ अधः, तेन १, २, ततः प्रथम-

| | | | |
|---|---|---|---|
| १ | ३ | ५ | ८ |
| ऽ | । | । | ऽ |
| २ | | | १३ |

लघोरुपरि त्रयाङ्कः ३, द्वितीयलघोरुपरि पञ्चाङ्कः ५, ततो गुरो-
रुपरि अष्टाङ्कः ८, तदधस्त्रयोदशाङ्कः [१३], तथाच लिपिक्रमः १, २,
३, ५, ८, १३। प्रथमगुरोरुपरि एकाङ्कः चरमगुरोरुपरि अष्टाङ्कः

अह मत्ताणं उद्दिट्ठं ।[१]

पुव्व[२] जुअल सरि अंका दिज्जसु
गुरु सिर अंके[३] सेस[४] मिटिज्जसु[५] ।
उवरल अंके[६] लेखिअ कहावहु[७]
ते परि[८] धुअ उद्दिट्ठं जाणहु[९] ॥ ३९ ॥ [अलिल्ला]

र्ण्यो [यदि] भवति गृहिणी नश्यति । पुन ग्रजोरुदासीन धन नश्यति । ग्रश्चो ग्रचौ नायक चयति ॥ इदमन्यचोक्तम्—

वर्ण्यते नायको यत्र फल तद्गतमादिशेत् ।
अन्यथा तु कृते काव्ये कवर्दोषावह फलम् ॥
देवता वर्ण्यते यत्र काव्ये क्वापि कवीश्वरैः ।
मित्रामित्रविचारो वा न तत्र फलकल्पना ।
देवतावाचका शब्दा ये च भद्रादिवाचका ।
ते सर्वे नैव निन्द्या स्युर्लिपितो गणतोऽपि वा ॥ ३८ । (G)

३९ । अथ मात्राणामुद्दिष्टं । पूर्वयुगलसदृशानङ्कान् देहि गुरुशिरोऽङ्के शेष प्रोञ्छय । उद्धृतमङ्क लिखित्वानय, तेन पुनर्ध्रुव मुद्दिष्ट जानीहि ॥ एतादृशो गणोऽमुकप्रस्तारस्य कुत्र वर्तते इति प्रश्ने तत्कथनायोद्दिष्टमुच्यते । तत्र चाय प्रकार — षट्कलप्रस्तारस्य

३९ । अथ मात्राणामुद्दिष्टं (A) अथ मत्ताणाउद्दिट्ठ (B) अथ मात्राणां उद्दिष्टं (D) १ पूर्व्व (B) पूव्व (C) पुव (D) पूव्व (F) २ अंक (A) अंक (B & C) अंकम्ह (E) ३ सेस (A) ४ मेटिज्जसु (A) मिटज्जसु (B & C) ६ अंक (A B C D & F) ७ कहावहु (A B & C) कर्‌ वावर (D) कर्‌ चावउ (E) ८ तथि पर (E) ९ जाण (A) जाणहुँ (D)

बोधितसंख्यायै सति सर्वान्तिमांकमध्ये उर्वरितो योऽङ्कस्तमित्यर्थः, सर्वान्तिमांकबोधितसंख्यामध्योर्वरितसंख्याबोधकमंकमिति यावत् । लेक्खिकद्द — वमसंख्याः [?] परिधार्य्येति यावत्, आणङ्ग — आनयस्व जानीहि इति यावत्, तहि पर — तदुपरि तेनेति यावत् मात्राणामिति शेषः, उद्दिट्ठा — उद्दिष्टम्, अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मे भेदे प्रथमत्वद्वितीयत्वादिधर्मनिर्द्धारणं, धुअ — ध्रुवं निश्चितं, जाणङ्ग — जानीहि । अत्र गुरुशिर इति शिरःपदोपादानात् गुरोरुपर्यधश्चांको देय इति सूच्यते, अन्यथा वर्णोद्दिष्टे लघूपरीतिवदत्रापि गुरोरुपरि इत्येव ब्रूयात् । लघोस्तु उपर्य्येवेति नियमो गुरूपदिष्टोऽनुसंधेयः । अयमर्थः — अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मभेदस्वरूपं विन्यस्य प्रथमाक्षरोपरि एकत्वसंख्याबोधकोऽङ्कः स्थाप्यः, द्वितीयाक्षरोपरि च पूर्वांकद्वयाभावात् पूर्वस्थैकांकद्विगुणकल्पनानिःपन्नो द्वितीयोऽङ्कः स्थाप्यः, तृतीयस्थाने च तत्पूर्वद्वितीयैकेत्यंकद्वयैक्यक्रियानिःपन्नः तृतीयोऽङ्कः स्थाप्यस्तुर्थस्थाने च तत्पूर्वतृतीयद्वितीयेत्यंकद्वयैक्यक्रियानिःपन्नः पंचमोऽङ्कः स्थाप्यः, पंचमस्थाने च तत्पूर्वपंचमतृतीयेत्यंकद्वयैक्यक्रियानिःपन्नोऽष्टमोऽङ्कः स्थाप्यः, षष्ठस्थाने च तत्पूर्वाष्टमपंचमेत्यंकद्वयैक्यक्रियानिःपन्नस्त्रयोदशोऽङ्कः स्थाप्यः । एवं षट्सु स्थानेषु षड़ंकाः यथाप्रस्तारसंख्यं षट्कलगणोद्दिष्टे स्थाप्याः । एवं पंचकलादावपि यथाप्रस्तारसंख्यमंकाः स्थाप्याः ।

| | | |
|---|---|---|
| १ | ३ | ८ |
| ऽ | ऽ | ऽ |
| २ | ५ | १३ |

एवं च त्रिगुरुः षट्कलस्य कतमो भेद इति पृष्टे, गुरुत्रयं लिखित्वा तत्र एकद्वित्रिपंचाष्टत्रयोदशेति

मिलित्वा नव, शेषभूते चयोदशाङ्के नवाङ्क ऊने कृते चतुरङ्कस्तिष्ठति, तेन एतादृशचतुर्थस्थानमिति वक्तव्यम्। यदि तु षट्कलप्रस्तारे लघुषड्क कुत्रास्तीति प्रश्नस्तत्र पूर्ववदेकादिचयोदशान्ता

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| । | । | । | । | । | । |

अङ्का देया, तत्र च गुरोरभावात् गुरूपर्यङ्काभाव, तेन शेषाङ्के किमपि कर्त्तनीयं नास्ति, तत्र शेषाङ्क एवावशिष्यते। तथाच षट्कलप्रस्तारस्य चयोदशस्थाने लघुषड्क पततीति वाच्यम्। (C)

२८। निर्दिष्टप्रस्तारकमस्थितिनिर्द्धारितसंख्याकगुरुलघुकलरूपनिर्णीतस्वरूपे भेदे प्रथमत्वद्वितीयत्वादिधर्मनिर्द्धारणमुद्दिष्ट। तद्द्विविध मात्रावर्णभेदात्। तत्र येनचित्कौतुकादर्शोद्दिष्टे[?] पृष्टे तत्प्रकारमाह। पुब्ब जुअलेति। पुब्ब जुअल सरि अका — पूर्वयुगलसदृशाकान्, अत्र पूर्वपदस्य पूर्वाकपरत्वात् पूर्वयुगलेत्यस्य पूर्वाकयुगलेत्यर्थ। एव च पूर्वं यदकयुगस्त तत्सदृश तत्तुल्य तदैक्यक्रियया यत्सपद्यते इति यावत् तमकमित्यर्थ। दिज्जसु — ददस्व, अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मकभेदस्वरूप लिखित्वा तदुपरोपरि पूर्वाकयुगलसदृशाक यथाप्रस्तारसंख्य क्रमेणोत्तरोत्तर स्थापयेत्यर्थ। अत्र यत पूर्वाक एव नास्ति त[त] प्रथमातिक्रमे कारणाभावात् प्रथमोऽक स्थाप्य, यतश्च पूर्वम् अकयुगस्त नास्ति तच यएव पूर्वाको भवति तद्द्विगुणिताक स्थाप्य इति गुरूपदेशोऽनुसधेय। तत्र गुरु सिर अकन्ह — गुरुशिरोऽकान् गुरो शिरसि ये अकास्तान्, सेस — शेषे सर्वानिमे अके, मिटिज्जसु — लोपय, गुरुशिरोऽकबोधितसख्या सर्वातिकाकबोधितसख्यायामूनीकुरु इति भाव। एव सति उबरल अक — उर्वरितमक गुरुशिरोऽक-

बोधितसंख्यायाः सर्वांतिमाष्टमांकबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, एवं चायं प्रथमो भेद इति वाच्यम् । एवं यत्र प्रथमं गुरुलघू ततो गुरुरीदृशो भेदः पंचकलस्य कतम इति पृष्टे, एक-

| | | |
|---|---|---|
| १ | २ | ५ |
| ऽ | । | ऽ |
| १ | | ८ |

द्वित्रिपंचाष्टेत्यंकपंचके यथास्थानं यथाक्रममुत्तरोत्तरं स्थापिते गुरुशिरःस्थैकपंचमेत्यंकद्वयमेव लब्धं, लब्ध-षष्ठसंख्याया अष्टमसंख्यामध्यलोपे उर्वरिता द्वित्वसंख्या, तथाचायं द्वितीयो भेद इति वाच्यम् । एवं यत्र लघुत्रयांते गुरुरीदृशो

| | | | |
|---|---|---|---|
| १ | २ | ३ | ५ |
| । | । | । | ऽ |
| | | | ८ |

भेदः कतम इति पृष्टे, पूर्वोक्तेऽकपंचके तथैव स्थापिते गुरुशिरःस्थपंचमांकबोधितसंख्यायाः सर्वांतिमाष्टमांकबोधिताष्टमसंख्यामध्यलोपे उर्वरिता त्रित्वसंख्या, तथाचायं तृतीयो भेद इति वाच्यम् । एवमग्रेऽपि गुरुशिरोऽकसंख्यायामष्टमसंख्याया लुप्तोर्वरितसंख्या तत्तद्भेदे वाच्या ।

एवं चतुःकले द्विगुरुः कतमो भेद इति पृष्टे, एकद्वित्रि-

| | |
|---|---|
| १ | २ |
| ऽ | ऽ |
| २ | ५ |

पंचेत्यंकचतुष्टये यथोक्तस्थाने यथाक्रममुत्तरोत्तरं स्थापिते गुरुशिरःस्थैकतृतीयेत्यंकद्वयबोधितचतुर्थसंख्यायाः सर्वांतिमपंचांकबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, तथाचायं प्रथमो भेद इति वाच्यम् । एवं चतुष्कले आदौ लघुद्वयं ततो

| | | |
|---|---|---|
| १ | २ | ३ |
| । | । | ऽ |
| | | ५ |

गुरुः ईदृशः कतमो भेद इति पृष्टे, उक्तरीत्योक्तांके स्थापिते गुरुशिरःस्थतृतीयांकबोधितत्रित्वसंख्यायाः सर्वांतिमपंचमांकबोधितसंख्यामध्यलोपे उर्वरिता द्वित्वसंख्या, तथाचायं द्वितीयो भेद इति वाच्यम् । एवं त्रिकले एकद्वित्रीति अंकत्रयं, द्विकले एकद्वीत्यंकद्वयं संस्थाप्य वाच्यम् । (E).

Here four entire leaves are missing in M.S. (E).—Ed.

षट्कानाम् क्रमेण गुरूणामुपर्यधश्च संस्थाप्य गुरुशिरस्येकद्वितीयाष्टमेत्यङ्कचयबोधितद्वादशसंख्याया शेषाङ्कचयोद्‌बोधितसंख्यामध्यलोपे उर्वरिता एकसंख्या, एवं च त्रिगुरु षट्कलस्य प्रथमो भेद इति

१ २ ३ ८
। ऽ ऽ
५ १३

वाच्यम्। एवं यत्र लघुद्वयोत्तरं गुरुद्वयं पतति एतादृश षट्कलस्य कतमो भेद इति पृष्टे, पूर्वोक्तरीत्या यथास्थानं षट्कानाम् संस्थाप्य गुरुशिर स्थद्वितीयाष्टमेत्यङ्कद्वयैक्यक्रियानि पञ्चैकादशाङ्कबोधितसंख्यायास्तयोदशसंख्यामध्ये लोपे उर्वरिता द्विसंख्या, तथा च द्वितीयो भेद इति वाच्यम्। एवं यत्रादौ

१ २ ५ ८
। ऽ ऽ
३ १३

लघुगुरू ततोऽपि लघुगुरू एतादृश षट्कलस्य कतमो भेद इति पृष्टे, उक्तरीत्या उक्तस्थानेषु तत्षट्कस्थापने गुरुशिरःस्थद्वितीयाष्टमेत्यङ्कद्वयैक्यक्रियानि पञ्चदशाङ्कबोधितसंख्यायास्तयोदशसंख्यामध्ये लोपे अवशिष्टा त्रिसंख्या, तथा च तृतीयो भेद इति वाच्यम्। एवमन्येऽपि गुरुशिरोऽङ्कसंख्यायां त्रयोदशसंख्यामध्ये लुप्तावशिष्टसंख्या तत्तद्भेदे वाच्या। षड्लघुरूपे

१ २ ३ ५ ८ १३
। । । । । ।

गुरुशिरोऽङ्काभावादार्थ्यसमाजसिद्धस्तादृशस्त्रयोदशो भेदो बोध्यः।

एवं पञ्चकलप्रस्तारेऽपि अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मभेदं लिखित्वा तदुपरि एकद्वित्रिपञ्चाष्टेत्यङ्कपञ्चकं यथाप्रस्तारसंख्यं यथाक्रममुत्तरोत्तरं स्थाप्यम्। एवं च यत्रादौ लघुस्ततो गुरुद्वयमीदृश पञ्चकलस्य कतमो भेद इति पृष्टे, एकद्वित्रिपञ्चाष्टेत्यङ्कपञ्चके

१ २ ३
। ऽ ऽ
५ ८

तयोक्तस्थाने यथाक्रममुत्तरोत्तरं संस्थापिते गुरुशिरःस्थद्वितीयपञ्चमेत्यङ्कद्वयैक्यक्रियानि पञ्चसप्तमाङ्क-

## अथ णट्टं ।[1]

णट्टे सव्व[2]कला कारिज्जसु[3]
पुव्व[4]जुअल सरि अंका[5] दिज्जसु ।
पुच्छल[6] अंकं[7] मिटावहु[8] सेख[9]
अवरउ[10] अंका[11] लुंपि[12] कहु लेख[13] ॥
जत्थ[14] जत्थ[14] पाविज्जइ[15] भाग
एहु[16] कहइ[17] फुर[18] पिंगल णाग ।
परमत्ता लेइ[19] गुरुता[20] जाइ
जत लेक्खहु[21] तत लेक्खहु[22] आइ ॥ ४०[23] ॥

---

४० । अथ मात्रानष्टमाह णट्टेत्यादि । नष्टे सर्व्वाः कलाः

---

४० । १ अथास्यां नष्टं (A), अथ मात्रायां नष्टं (D). २ सव्वे (B), सव (D). ३ करिज्जसु (B, C & D). ४ पूर्व्व (B), dropt in (C) ५ सिर अंका (D). ६ पूछल (A), पुछल (D). ७ अंक (A & D), अङ्क (B & C). ८ मेटावहु (A), मेटावहि (B), मेटावइ (C), मेटावड (D), मिट्टावहि (F). ९ सेस (A), सेक्ख (B & C), सेसा (D). १० उवरल (A, D & F). ११ अंक (A, B, C & D). १२ लुम्पि (B & C), लोप्पि (D), लोपि (F). १३ लेक्ख (B & C). १४ जत्थ (A). १५ पविज्जइ (B), पाइज्जइ (D). १६ एह (A). १७ भणइ (B & C). १८ फुल (B), फुड (F). The quadrant runs thus in (C) and (D)— एऊ भणइ पुन पिङ्गल नाग (C), कहइ फणइ पुणि पिंगल णाग (D). १९ लइ (B & C), ले (F). २० गुरुआ (B), गुरुआ (C). २१ लेक्खसि (B), लेक्खउ (D & F). २२ Dropt in (C). २३ The name of the metre is not mentioned in any of the commentaries; neither does it agree with the definition of any metre described in the book.—Ed.

२८। अथ मात्रोद्दिष्टमाह पादाकुलकेन [?] पुब्वेति। पूर्वयुगलसदृशानकान्देहि, गुरुशिरोऽङ्क शेषे लोपय, उर्वरिताङ्क लिखित्वा कथय, एवम्प्रकारेणोद्दिष्ट जानीत। उक्तार्थस्पष्टयमेव। पूर्व पूर्वाङ्कयुगल सर्वमात्रोपरि न्यसेत्। द्विमात्रस्य गुरोरूर्द्ध्वं पूर्वं पश्चादधो लिखेत्। गुरूर्द्ध्वाङ्कसमाहारादुद्दिष्टं ज्ञायते ध्रुव ॥ इद षट्कले दशमभेदे योज्यते। तत्र तावत् ॥ऽ॥ अथ भेद कतिथ इति प्रश्न। तत्र प्रथममात्राया' पूर्वमङ्काभावादेकस्थिरस्थोऽङ्को द्वितीयमात्रोपरि द्वय २, तृतीयमात्राया पूर्वाङ्कद्वये एकद्विरूप त्रय लिखेत्। तृतीयस्थाने द्विमात्रस्य गुरो सत्वाद् द्वितीयोऽङ्क पूर्वाङ्कद्वयरूप पञ्चात्मकोऽधस्ताल्लेख्य, पञ्चममात्रोपरि अष्टौ षष्ठोपरि त्रयोदशेति क्रमेण लिखेदेव सर्वत्र। अत्र गुरुशिरःस्थोऽङ्कस्त्रयमतिमत्रयोदशाङ्के लोपयेत्। एव कृते शिष्टा दश, तत्सङ्ख्योऽय भेद इति। एवमुदाहरणान्तरेऽपि योज्य। तद्यथा—

| | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ८ | १३ |
| । | । | ऽ | । | । |
| | | ५ | | |

अथास्मात्कविलात्कि फल भविष्यतीत्युद्दिश्य मात्रोद्दिष्टमाह ॥ पुब्वेति ॥ अथेदमवधेय

माथाभेद समुत्पाद्य स्थानसङ्ख्यान्वित[?] चरेत् ।
यथा तथास्य भवति सद्देदाद्युतौ फलम् ॥
आदिशून्ये भवेद्धानिरन्त्यशून्ये महद्भयम् ।
मध्यशून्ये भवेन्मृत्यु' सर्वाङ्के विजयो भवेत् ॥
तद्दग्धतेऽप्यहितये न कार्य सभामित्युक्तैर्भवतीह यथा ।
इमे समुद्रेभ्य च कार्यसिद्धिर्न चैकपदमन्तरित भवति ।

इति केचिदाहु ॥ (0)

## आसां णट्टं ।[1]

णट्ठे सव्व[2]कला कारिज्जसु[3]
पुव्व[4]जुअल सरि अंका[5] दिज्जसु ।
पुच्छल[6] अंकं[7] मिटावहु[8] सेख[9]
अवरउ[10] अंका[11] लुंपि[12] कहु लेख[13] ॥
जत्थ[14] जत्थ[15] पाविज्जइ[16] भाग
एहु[17] कहइ[18] फुर[19] पिंगल णाग ।
परमत्ता लेइ[20] गुरुता[21] जाइ
जत लेक्खहु[22] तत लेक्खहु[23] आइ ॥ ४०[24] ॥

---

४० । अथ मात्रानष्टमाह णट्ठेत्यादि । नष्टे सर्व्वाः कलाः

---

४० । १ अथासां नष्टं (A), अथ मात्रायां नष्टं (D) २ सव्वँ (B), सव (D). ३ करिज्जसु (B, C & D). ४ पूव्वँ (B), dropt in (C) ५ सिर अंका (D). ६ पूछल (A), पुछल (D). ७ अंक (A & D), अङ्क (B & C). ८ मेटावहु (A), मेटावहि (B), मेटावइ (C), मेटावऊ (D), मिट्टावहि (F). ९ सेस (A), सेक्ख (B & C), सेस्सा (D). १० उवरल (A, D & F). ११ अंक (A, B, C & D). १२ लुम्पि (B & C), लोप्पि (D), लोपि (F). १३ लेक्ख (B & C). १४ जच्छ (A). १५ पविज्जइ (B), पाइज्जइ (D). १६ एह (A). १७ भणइ (B & C). १८ फुल (B), फुष (F). The quadrant runs thus in (C) and (D) — एऊ भणइ पुन पिङ्गल नाग (C), कहइ फणइ पुणि पिंगल णाग (D). १९ लइ (B & C), ले (F). २० गुरुया (B), गुरुआ (C). २१ लेक्खसि (B), लेक्खऊ (D & F). २२ Dropt in (C). २३ The name of the metre is not mentioned in any of the commentaries; neither does it agree with the definition of any metre described in the book.—Ed.

कुरुष्व, पूर्व्वयुगलसदृशानङ्कान् देहि, पश्चाङ्केन शेष लोपय, उद्वृत्त-मङ्क लोपयित्वा लिख, यत्र य प्राप्यते भाग एतद्भणति स्फुट पिङ्गलनाग । परमात्रा गृहीत्वा गुरुता याति, यावल्लिख्यते ताव लेखमायाति। अमुकप्रस्तारस्यामुकस्थाने कीदृशो गणस्तिष्ठतीति प्रश्ने, तत्कथनाय नष्टमिदमुच्यते। नष्टे ज्ञातव्ये इति। तथाचाय प्रकार, षट्कलप्रस्तारस्य प्रथमस्थाने कीदृग्गणस्तिष्ठति इति प्रश्ने, सर्व्वा कला कर्त्तव्या भवन्ति। सर्व्वकलाकरणे च षड्लघव स्थाप-नीयाः, यथा ।।।।।।, तत्र च पूर्व्वयुगलसदृशाङ्कदान पूर्व्ववर्त्तन लिपिक्रम १, २ ३ ५, ८, १३, अत्र च शेषाङ्के प्रश्नाङ्क[लो]प कर्त्तव्यो भवति, शेष त्रयोदशाङ्क, तत्र प्रश्नाङ्कस्यैकस्य लोपात् द्वादशाङ्कोऽवशिष्ट, तल्लोपेन गुरुलघवो लेख्या भवन्ति। पुन तल्लोपप्रका[र]श्चोच्यते द्वितीयश्लोकेन, तस्यायमर्थ प्रदर्श्यते। लोपा-वशिष्टो द्वादशाङ्क तस्य भाग प्राप्यते यैर्यैरङ्के, सोऽङ्को निर्व्वहति, तेषां परमात्रया सह गुरुता कर्त्तव्या तथाहि प्रकृते च प्रथमकलाया-मेकाङ्कस्तृतीयकलायां त्र्यङ्क पञ्चकलायामष्टाङ्क इति मिलित्वा द्वादशाङ्क-निर्व्वाहस्तयाच एकाङ्क प्रथमकलाया तिष्ठति, सापि परमात्रया सह गुरुतां गता, तथाच षट्कलप्रस्तारे त्रिगुरुगण इति लभ्यते। इदन्तु बोध्य प्रकारद्वयेनापि यत्रोद्वृत्ताङ्को निर्वहति, तत्र परमात्रया सह गुरुता न सम्भवति, स एवाङ्को मान्य। तथा हि षट्क[ल]प्रस्तारे पञ्चमस्थाने कीदृशो गण इति प्रश्ने सर्व्वलघु-करण पूर्व्वयुगलसदृशाङ्कदानञ्च पूर्व्ववर्त्तन १, २, ३, ५, ८, १३। अत्र च त्रयोदशाङ्के पञ्चमलोपेऽवशिष्टो भवति अष्टाङ्क स च पञ्च-

लघोरुपरि तिष्ठति, एकद्वित्रिपञ्चभिर्मिलिताभिः सम्भवति, तत्र पञ्चमलघोरुपरि स्थिताङ्क एव गृह्यते, अन्यथा एकाङ्कस्य परमात्रया सह गुरुतापादने द्व्याङ्कस्याधःस्थाङ्क एव नाप्नोति तस्य गुरुतापादकलाभावात् तस्योपादानमनर्थकमापद्येत, इत्यञ्च पञ्चमषष्ठकलाभ्यां मिलित्वा गुरुतापादने लघुचतुष्टयमेको गुरुश्च ।।।।ऽ पञ्चमस्थाने प[त]तीति वक्तव्यम् । षट्कलप्रस्तारस्य त्रयोदशस्थाने कीदृग्गण इति प्रश्ने, त्रयोदशाङ्कस्य त्रयोदशाङ्कलोपे न किञ्चिदवशिष्यते, तेन गुरुकरणाभावः, तथाच सर्व्वलघुरेव शिष्यते ।।।।।। (C).

४० । पट्ट । नष्टे सर्वाः कलाः कुरु, पूर्वयुगलसदृशानंकान् देहि । पृष्टमंकं लोपय शेषे उर्वरितमंकं लुप्ता कथय लेख्ये ॥ यत्र यत्र प्राप्यते भाग एवं कथयति स्फुटं पिंगलनागः । परमात्रां गृहीत्वा गुरुतां याति, यावच्छिष्यते तावल्लेख आयाति ॥ इदं षट्कले दशमो भेदः कीदृगिति प्रश्ने योच्यते । तत्र सर्वकलाः ।।।।।। पूर्ववदंकिताः, पृष्टांको दशमः शेषे त्रयोदशांके ऊनितः । शेषास्त्रयः । तत्रावशिष्टांकेषु मध्ये तृतीयः अंको लुप्तः । यत्रेति कृते तृतीया कला चतुर्थया सह गुरुतां याता ।।ऽ।।, अयं दशमो भेदो वक्तव्यः । प्रथमद्वितीयरूपांकस्य लोपो न संभवति । प्रथममात्राया अग्रिममात्रया सह गुरुताया असंभवात्, द्विरूपस्यांकस्यापि भागस्थानीयत्वात् ॥ (G).

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| । | । | । | । | । | । |

N.B. In MS. (D) the slokas here numbered ४५ to ४८ precede those numbered ४१ to ४४, and ५० precedes ४९ । —Ed.

अह वर्णाणं उद्दिट्ठं (C) ।[1]

अक्खर[2] उप्परि[3] दुगा
अंका दिज्जहु[4] गुण[णे]हु[5] उद्दिट्ठा[6] ।
लहु उप्परि[3] जो अंको
तं दइ[7] एक्केण जाणेहु ॥ ४१ ॥ [गाहा]

---

४१ । वर्णोद्दिष्टमाह । अक्षरोपरि द्विगुणानङ्कान् देहि उद्दिष्टे। लघोरुपरि योऽङ्कस्तं दत्त्वा एकेन जानीहि ॥ एकेन सह दद्यादित्यनेन तदाङ्के एकेन सह मिश्रणं कार्यमित्यर्थः । चतुरक्षरप्रस्तारे सर्व्वगुरु कुत्र वर्त्तते ऽऽऽऽ इति प्रश्ने, अक्षरोपरि द्विगुणा द्विगुणा अङ्का देयाः, तथाच १ २ ४ ८ / ऽ ऽ ऽ ऽ अत्र लघोरभावात् लघूपरिस्थिताङ्कस्य एकेन मिश्रणं [न] सम्भवति, किन्तु एकाङ्क एवावशिष्यते, तेन चतुरक्षरप्रस्तारस्य गुरुचतुष्कं प्रथमत एव पततीति वक्तव्यम् । अपरं दर्शयति, चतुरक्षरप्रस्तारस्याद्यन्तयोर्लघुद्वयं मध्यस्थाने गुरुद्वयं [कुत्र] पततीति १ २ ४ ८ / । ऽ ऽ । प्रश्ने, उत्तरोत्तरं द्विगुणा अङ्का देयास्तथाच तत्र लघूपरि एकाङ्कोऽष्टाङ्कश्च इति मिलिता नव, तत्र चैकाङ्कयोजने कृते सति दशाङ्कः सम्भवति, तेन द[श]मस्थाने इति वक्तव्यम् । चतुरक्षरप्रस्तारे सर्व्वलघु कुत्र वर्त्तते १ २ ४ ८ / । । । । इति प्रश्ने, द्विगुणा अङ्का देया, प्रथमलघोरुपरि एकाङ्कः, ततो

४१। १ अथ वर्णोद्दिष्टम् (A) अथ वर्णोद्दिष्टं (B) अथ वर्णानां उद्दिष्ट (D) अथ वर्णोद्दिष्टम् (F) २ अक्खर (B & C) ३ उप्पर (A & D) ४ दिज्जहु (F) ५ गुणह (B) गुणहु (C) गुणहं (D) गुणगुणेहु (F) ६ उद्दिट्ठ (A & F) उद्दिट्ठा (D) ७ देइ (A & D) दवि (B) In (F), after अंको in the last half तं दइ एक्केण जाणेहु ।

आसां णट्टं ।[1]

णट्टे अंके भाग[2] करिज्जसु
सम[3] भागह[4] तहि[5] लहुअ[6] मुणिज्जसु[7] ।
विखम[8] एक दे[9] वंठण किज्जसु
पिंगल जंपइ गुरु आणिज्जसु ॥ ४२ ॥ [अलिल्ला]

---

द्वयाङ्कः, ततश्चतुरङ्कः, ततोऽष्टाङ्कः, एकेन सर्व्वाणि मिलित्वा षोड़श, षोड़शस्थाने पततीति वक्तव्यम् । (C).

४१ । अथ वर्णोद्दिष्टमाह अक्ख ॥ अक्षरोपरि द्विगुणानंकान्देहि, पश्चाज्जानीतोद्दिष्टं । लघूपरि योऽंकः पतति सैकं कृत्वा तं जानीत ॥ उक्तं चान्यत्र । उद्दिष्टं द्विगुणानाद्यादुपर्यंकान् समालिखेत् । लघुस्था ये तु तत्रांकास्तैः सैकैर्मिश्रितैर्भवेत् ॥ इदं चतुरक्षरे योज्यते ॥ यथायं भेदः ।।ऽ। कतिथ इति प्रश्ने, द्विगुणांकदाने न्यासः १ २ ४ ८ / । । ऽ । अत्र लघुस्थांकाः एकद्व्यष्टरूपास्तेषां योगः ११ एकादश, सैकः १२ द्वादश, एतत्संख्योऽयं भेद इति स्पष्टम् ॥ (G).

N.B. There is a process different from this in the Sanskrit work of Pingala, and its commentary by Halâyudha. Vide Society's Edition by Vishwanâtha Sástrí, pp. 233–234. The same result may be analytically arrived at: vide Ghosha's Chhandah-sára-sangraha, Introduction, p. xix. para 46.—Ed.

---

४२ । १ अथैषां नष्टं (A), अथ वर्णानां नष्टं (D). २ भाग्ग (E). ३ सरि (B, C & F). ४ भाग्गइ (B & C), भागे (D & F), भाग्गइँ (E). ५ ते (A & D), तह (E). ६ लड (B, C, D, E & F). ७ थाणिज्जसु (B & C), मुणिज्जइ (D & E). ८ विसम (D, E & F), विषम (C). ९ देइ (A, D & E), दइ (B & C).

४१। वर्णं [नष्ट] माह। नष्टाङ्के भाग कुरुष्व सदृशभागे तस्मिन् लघुमानयस्व। विषमे एक दत्त्वा बण्टन कुरुष्व पिङ्गलो जल्पति गुरुमानयस्व॥ नष्टे षड्भिर्भागे प्रश्नेऽङ्कस्य भाग कर्त्तव्य। यत्र प्रश्नाङ्क समो भवति तत्र लघु स्थाप्य, तदर्द्धस्यापि समत्वे पुनरपि तदर्द्धं कृत्वा लघु स्थाप्य। एवमग्रेऽपि। विषमप्रश्नाङ्के वा [तु] गुरु स्थाप्य तथाङ्के चैक दत्त्वा भाग कार्य इति क्रम। उदाहरण यथा, चतुरक्षरप्रस्तारे कीदृक् प्रथमो गण इति प्रश्ने, प्रश्नाङ्क एकस्तस्य विषमत्वाद्गुरु स्थाप्य ऽ, तत्र चैकाङ्के पुनरेकयोजने द्वयाङ्को जातस्तदर्द्धमेक सोऽपि विषम तेन पुनरपि गुरुर्लेख्य, एवमग्रेऽपि गुरुरेवायातीति चतुर्गुरु ऽऽऽऽ प्रथमप्रस्तार इति वाच्यम्। एव चतुरक्षरजाते [प्रस्तारे] दशमस्थाने कीदृगिति प्रश्ने दशाङ्कस्य समत्वादादौ लघु स्थाप्य, तदर्द्धे च कृते पञ्चाङ्क प्राप्तस्तस्य विषमत्वाद्गुरु स्थाप्य, तत्र च एकदाने षड्को भवति, तदर्द्धकरणे च त्र्यङ्को भवति, स च विषमो भवति इति पुनरपि गुरु स्थाप्य, त्र्यङ्के चैकयोजने चतुरङ्कस्तस्य च समत्वाल्लघु स्थाप्य।ऽऽ।, इत्थ चतुरक्षरप्रस्तारे दशमस्थाने आद्यन्ते लघु मध्ये गुरुद्वयमस्तीति वक्तव्यम्। (C)

४२। अथ वर्णवृत्तभेदेषु नष्टप्रकारमाह णट्ठेति। अङ्के समे विषमे वेत्यर्थ, भाअ — भाग, अर्द्धांशमिति यावत् यथाप्रस्तारसङ्ख्यामिति शेष, करिज्जसु — कुरुष्व कल्पयेति यावत्, तत्र स सम भाअद्धे — सम भाग समस्य भाग अर्द्धांश इत्यर्थ, तह — तत्र, लहु — लघु मुणिज्जसु — जानीहि क[थ]येति यावत्,

बिसम — विषमस्यांकस्य एक्क — एकम् एकत्वसंख्याबोधकमंकमित्यर्थः, देइ — दत्त्वा संयोज्येति यावत्, वंठण — वंटनं भागमद्धांशमिति यावत्, किज्जसु — कुरुष्व कल्पयेति यावत्, वंटनमिति भागकल्पने देशी, ततः गुरु आणिज्जसु — गुरुमानय कल्पयेति यावत्। एवंप्रकारेण वर्णवृत्तभेदानामिति शेषः; णट्ठ — नष्टं नष्टप्रकारमिति यावत्, पिंगल जंपइ — पिंगलो जल्पति कथयति॥ समांकभागे कृते योऽङ्कः स लघुकल्पकः, विषमांकभागे योऽङ्कः स गुरुकल्पकः। विषमांकस्य भागस्तु विषमांकमेकेनांकेन संयोज्य कल्पनीय इति निर्गलितार्थः। अत्र यद्यपि एकांकेन योजितो विषमः समभावं प्राप्नोति तथापि तस्य भागः विषमांकभागएवेति, ततो लघुकल्पनभ्रान्तिर्न कर्त्तव्येति ध्येयम्। अयमर्थः —

एकाक्षरवृत्तस्य प्रथमो भेदः कीदृश इति पृष्टे, एकांके विषमे एकांकयोजनेन कृतभागे एको गुरुः कल्प्यः। अनंतरं चाक्षराभावान्न कल्पना। एवं च एकाक्षरवृत्तस्य प्रथमो भेद एकगुरुरिति वाच्यम्। एवमेकाक्षरवृत्तस्य द्वितीयो भेदः कीदृश इति पृष्टे * * * कल्पनीयः, अनंतरं चाक्षराभावान्न कल्पना, एकलघुर्द्वितीयो भेद इति वाच्यम्।

एवं द्व्यक्षरवृत्तस्य प्रथमो भेदः कीदृश इति पृष्टे, पृष्टस्य एकांकस्य विषमस्य एकांकयोजनेन भागे एको गुरुः कल्पनीयः, पुनरपि भागलब्धस्यैकांकस्य विषमस्य भा[गे] द्वितीयो गुरुः कल्प्यः। अनंतरं चाक्षराभावान्न कल्पना, एवं द्विगुरुर्द्व्यक्षरवृत्तस्य प्रथमो भेदइति वाच्यः। एवं द्वितीयो भेदः कीदृश इति पृष्टे, पृष्टस्य

द्वितीयाकस्य समस्य भागे एको लघु कल्पनीयस्ततो भागलब्ध स्यैकाकस्य विषमत्वादेकेन योजितस्य भागे एको गुरु कल्प्य, अनन्तर चाचराभावाच कल्पना, एव च प्रथममेको लघुस्तत एको गुरुरीदृशो द्व्यक्षरवृत्तस्य द्वितीयो भेद । एव द्व्यक्षरवृत्तस्य तृतीयो भेद कीदृश इति पृष्टे, पृष्टाकस्य तृतीयस्य विषमत्वादेकाकयोजनेन भागे प्रथममेको गुरु कल्पनीयस्ततो भागलब्धस्य द्वितीयांकस्य समत्वाद्भागे एको लघु कल्प्य, अनन्तर चाचराभावाच कल्पना, एव च यत्र क्रमेण गुरुलघू भवत ईदृशो द्व्यक्षरवृत्तस्य तृतीयो भेद इति वाच्यम् । एव चतुर्थो भेद कीदृश इति पृष्टे, पृष्टाकस्य चतुर्थस्य समत्वात्तद्भागे प्रथम एको लघु कल्प्य, ततो-भागलब्धस्य द्वितीयांकस्यापि समत्वात्तद्भागेऽपि पुनरप्येको लघु कल्प्य, अनन्तर चाचराभावाच कल्पना, एव च यत्र लघुद्वय स द्व्यक्षरवृत्तस्य चतुर्थो भेद इति वाच्यम् ।

एव त्र्यक्षरस्य प्रथमो भेद कीदृश इति पृष्टे, पृष्टाकस्य एकस्य विषमत्वादेकांकेन योजितस्य भागे एको गुरु प्रथम कल्प्य, ततो-भागलब्धस्यैकांकस्य विषमत्वादेकांकयोजनादारद्वय भागे गुरुद्वय-कल्पनम्, अनन्तर चाचराभावाच कल्पना, एव च यत्र गुरुत्रय-मीदृशस्त्र्यक्षरवृत्तस्य प्रथमो भेद इति वाच्यम् । एवं त्र्यक्षरस्य द्वितीयो भेद कीदृश इति पृष्टे, पृष्टांकस्य द्वितीयस्य समत्वाद्भागे प्रथममेको लघु कल्प्यस्ततो भागलब्धस्यैकांकस्य विषमत्वादेकांक-योजनादारद्वय भागे गुरुद्वय कल्पनीयमनन्तर चाचराभावाच कल्पना, एव यत्र प्रथममेको लघुस्ततो गुरुद्वयमीदृशस्त्र्यक्षरस्य

द्वितीयो भेद इति वाच्यम्। एवं त्र्यक्षरस्य तृतीयो भेदः कीदृश इति [पृष्टे], पृष्टांकस्य तृतीयस्य विषमत्वादेकांकयोगेन भागकल्पने एकगुरुः कल्प्यस्ततो भागलब्धस्य द्वितीयांकस्य समत्वात्तद्भागे लघुः कल्प्यस्ततो भागलब्धस्य एकांकस्य विषमत्वादेकांकयोगेन तद्भागे गुरुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च यत्र प्रथममेको गुरुस्ततो लघुगुरू ईदृशस्त्र्यक्षरस्य तृतीयो भेद इति वाच्यम्। एवं त्र्यक्षरवृत्तस्य चतुर्थो भेदः कीदृश इति पृष्टे, पृष्टस्य चतुर्थांकस्य समत्वात्तद्भागे एको लघुः कल्प्यस्ततो भागलब्धस्य द्वितीयांकस्यापि समत्वात्तद्भागेऽपि लघुः कल्पनीयः, ततो भागलब्धस्यैकांकस्य विषमत्वादेकांकयोगेन तद्भागे गुरुः कल्पनीयस्ततस्त्वक्षराभावान्न कल्पना, एवं च यत्र प्रथमं लघुद्वयं तत एको गुरुरीदृशस्त्र्यक्षरवृत्तस्य चतुर्थो भेदः इति वाच्यम्। एवमग्रेऽप्यूह्यम्।

एवं चतुरक्षरस्य प्रथमो भेदः कीदृश इति पृष्टे, पृष्टांकस्यैकस्य विषमत्वादेकं दत्त्वा तद्भागे एको गुरुः कल्पनीयः, ततो-भागलब्धस्यैकांकस्य वारत्रयमेकांकयोजनेन भागे गुरुत्रयं कल्पयित्वा चतुर्गुरुश्चतुरक्षर[स्य] प्रथमो भेद इति वाच्यम्। एवं चतुरक्षरस्य द्वितीयो भेदः कीदृश इति पृष्टे, पृष्टस्य द्वितीयांकस्य समत्वात्तद्भागे एको लघुः कल्पनीयस्ततो भागलब्धस्यैकस्य विषमत्वादेकांकं दत्त्वा वारत्रयं भागकल्पने गुरुकल्पने गुरुत्रयं कल्पनीयम्, एवं च यत्रादौ एको लघुस्ततो गुरुत्रयमीदृशश्चतुरक्षरस्य द्वितीयो भेद इति वाच्यम्। एवमग्रेऽप्यूह्यम्। (E).

४२। पट्टे। नष्टेऽंके भागं कुरु, समे भागे [तं] लघुं जानीहि।

अह वणमेरु (B) ।[१]

अक्खर[२] संखे[३] कोट्ठ करु
आइ अंत पढमंक[४] ।
सिर दुइ अंके अवरु[५] भरु
सूई[६] मेरु णिसंक[७] ॥ ४३ ॥ दोहा ।

---

विषमे एक इत्ता भाग कुरु, पिंगलो जल्पति गुरुमानय ॥ नष्टस्यांके समे लघुर्विषमे गुरुरित्यर्थः । इदं चतुरक्षरे बोध्यते । अत्र द्वादशो भेदः कीदृगिति प्रश्ने, द्वादशांकस्य समत्वादाद्यो लघु, तदर्द्धस्य षड़कस्यापि समत्वाद्द्वितीयोऽपि लघु, तदर्द्धस्य त्र्यकस्य विषमत्वाद्गुरु, एकस्य तदर्द्धस्य द्व्यकस्य समत्वाल्लघु, तथा ।।ऽ।, अत्र भेदो द्वादशसंख्य इत्यर्थः । एवं पञ्चाक्षरादावपि बोध्यम् ॥ ४२ ॥ (G

४३ । अथ वर्णमेरु । अक्षरसंख्यया कोष्ठ कुरु, आद्यन्तेषु प्रथमोऽङ्क । शिरोद्वयाङ्केनापर बिभृहि सूचीमेरौ निःशङ्कम् ॥ एकाक्षरमारभ्य यावदक्षर छन्दसां चिकीर्षित भवति तावती पंक्ति कर्त्तव्या । तत्र चाद्यावन्ते चैकांकदान कार्यं, तेन प्रथमपङ्क्तौ कोष्ठ-द्वयमेव । सूचीमेरुरिति समाख्यावशादादौ सूक्ष्मता, उत्तरोत्तरं

---

४३ । १ अथ वर्णमेरु (A & E) २ अक्षर (B) अक्खर (D) ३ संखेण (B) संखे (C) संख (F) ४ पढमअंक (B & F), अंक after ॥ १8 (F) ५ अवर (D & E) आनह before सूई (F) ६ सूई (D & F) ७ विसंका (E) णीसंक (F)

चाधिक्यमवगम्यते । तेन द्वितीयपंक्तौ कोष्ठत्रयमेवमेवैककोष्ठवृद्ध्या लेख्यम् । तत्र चायमङ्कदानप्रकारः,— सर्वत्रैव पंक्तौ आदावन्ते च

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| एकवर्णसंख्यापंक्ति | १ | १ | | | | | | | | | २ |
| द्विवर्णसंख्यापंक्ति | १ | २ | १ | | | | | | | | ४ |
| त्रिवर्णसंख्यापंक्ति | १ | ३ | ३ | १ | | | | | | | ८ |
| चतुर्वर्ण ,, | १ | ४ | ६ | ४ | १ | | | | | | १६ |
| पंचवर्ण ,, | १ | ५ | १० | १० | ५ | १ | | | | | ३२ |
| षड्वर्ण ,, | १ | ६ | १५ | २० | १५ | ६ | १ | | | | ६४ |
| सप्तवर्ण ,, | १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | | | १२८ |
| अष्टवर्ण ,, | १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | | २५६ |
| नववर्ण ,, | १ | ९ | ३६ | ८४ | १२६ | १२६ | ८४ | ३६ | ९ | १ | ५१२ |

एकाङ्को देयः, रिक्तकोष्ठकानाञ्च उपरिस्थिताङ्कद्वयेन पूरणं कार्यं । तथाहि प्रथमकोष्ठे तावद्रिक्तकोष्ठाभावः । द्वितीयपंक्तौ मध्यस्थं रिक्तमस्ति, तच्च तदुपरिस्थिताङ्कद्वयेन पूरणीयमत्र च उपरि एकाङ्कद्वयसत्त्वात् मिलित्वा द्वयाङ्को निष्पद्यते, अतः स तत्र लेख्यः । तृतीयपंक्तौ रिक्तकोष्ठद्वयं, तत्र च प्रथमस्योपरि एकाङ्को द्वयाङ्कश्चेति मिलित्वा त्रयाङ्क इति स तत्र लेख्यः, द्वितीयस्योपरि [एकाङ्कः] द्वयाङ्कश्चेति मिलित्वा त्रयाङ्को जातः स तत्र लेख्यः, एवमग्रेऽपि ।

अथ मेरोः प्रयोजनमुच्यते । प्रथमपंक्तावाद्यन्तयोरेकाङ्कसत्त्वाद्द्वयं निष्पन्नं, तेन एकाक्षरजातौ प्रस्तारद्वयमिति लभ्यते । तत्र प्रथममेकाङ्कसत्त्वात्सर्व्वगुरुरेकः, परतश्चैकाङ्कसत्त्वात्सर्व्वलघुरप्येकः । द्वितीयपंक्तौ च मिलित्वा चतुरङ्कसत्त्वाद् द्व्यक्षरजातौ प्रस्तारचतुष्टयम्, आदावेकाङ्कसत्त्वात्सर्व्वगुरुरेकः, द्विती[ये] द्वयाङ्कसत्त्वा-

देकगुरुद्वयम् अद्धे च्चो च एकमत्वात्सर्व्वलघुरेकः। एवं तृतीय पङ्क्तौ च मिलित्वा अष्टाङ्को निष्पन्नः, तेन त्र्यक्षरजातौ प्रस्ता[रा]-ष्टकम्, एकं सर्व्वगुरु, एकं सर्व्वलघु, त्रिगुरुद्वयं, त्रिरेकगुरु, एवमग्रेऽपि बोद्धव्यम् ॥ (८)

४३। अमुकवर्णवृत्तमात्रागणप्रस्तारयोरेतावद्गुरुलघुकौ भेदं कतिसंख्याक इति अनिर्द्दिष्टकमस्ति तन्निर्द्धारितसंख्याकगुरुलघु-युक्तरूपप्रस्तारनिर्णीतस्वरूपात्सन्निर्द्धारितसंख्याकभेदनिष्ठाया एको द्वावित्यादिपिण्डीभूतैकत्वद्वित्वादिकाया निखिलवर्णवृत्तमात्रागण-भेदनिष्ठायाः पिण्डीभूतद्वित्वत्रिचतुरष्टषोडशत्वादिकाया संख्याया निर्द्धारककोष्ठसंख्याकमसृष्टो वा मेरुः। अत्र निखिलभेदनिष्ठपिण्डी भूतद्वित्वचतुष्ट्वादिसंख्यानिर्द्धारणं तत्तन्मेरुपङ्क्तिनिखिलकोष्ठवर्त्त्यङ्क-योजननिष्पन्नाङ्केन बोध्यमिति गुरूपदेशोऽनुसन्धेयः। पूर्व्ववद्द्विविधे, तत्र वर्णमेरुप्रकारमाह। अक्खरसखेति। अक्खर सखे — संख्याता-क्षराणाम्। अत्राक्षरपदस्य चरणाक्षरपरत्वात्संख्यातचरणाक्षराणा-मित्यर्थः। संख्यातानि एकादिषड्विंशतिपर्य्यन्तसंख्यायुक्तानि चरणा-क्षराणि येषां तेषां वृत्तानामिति निर्गलितार्थः। कोट्ठ — कोष्ठानि गुरूपदेशादिति शेषः, करु — कुरु। एकाक्षरचरणवृत्तस्य कोष्ठद्वयं द्व्यक्षरचरणवृत्तस्य कोष्ठत्रयं, त्र्यक्षरचरणवृत्तस्य कोष्ठ[चतुष्टयं] चतुर-क्षरचरणवृत्तस्य कोष्ठपञ्चकमित्येवं गुरूपदेशादुत्तरोत्तरैकैकवृद्ध्या एकाक्षरमारभ्य षड्विंशत्यक्षरपर्य्यन्तं कोष्ठानि कल्पयेति निर्गलितार्थः। तसु आद अंत — आद्यतयोः कोष्ठयोः, पढमक — प्रथममङ्कमेकत्व-संख्याबोधकमङ्कमिति यावत् देहीति शेषः। अवर — अपरं आद्य-

तांतरालस्थितमिति यावत् कोष्ठकं, सिर दुइ अंके — शिरोऽंकद्वयेन, अवहट्टभाषायां पूर्व्वनिपातानियमात्, भरु—पूरय पूरणीयकोष्ठ-शिर:स्थांकद्वययोजननिष्पन्नांकेनाद्यंतांतरालस्थितं कोष्ठं पूरणीय-मित्यर्थ:। एवम्प्रकारेणेति शेष:, मेरु—मेरु:, णिसंक—नि:शंकं निश्चयेनेति यावत्, सूई—सूच्यते निर्म्मीयते इति योजना।

अथैतन्निर्माणप्रकारो लिख्यते। प्रथमं वामदक्षिणयोरेकांगुल-मायतमूर्द्धाधोरेखाद्वयं विनिर्माय तत्पार्श्वयो: ऋजुरेखया मेल-नीयमेवमेकं दीर्घं कोष्ठं विधाय तत्र ऊर्द्धरेखामध्यदेशमारभ्याधो-रेखामध्यदेशपर्यंतमेकामृजुरेखां दत्त्वा कोष्ठद्वयं कल्पनीयं, तत्र तत्र प्रत्येकमेकैकोऽंको देय:, तत्र प्रथममिदं मेरुस्वरूपं प्रथमकोष्ठस्यै-कांकेन एकवर्णवृत्त एकगुरुरेको भेद:, द्वितीयकोष्ठस्यैकांकेन च एक-लघुरेको भेद: इति निर्द्धारितैकत्वसंख्याकगुरुलघुयुक्तत्वरूपनिर्णीत-स्वरूपैकवर्णभेदनिष्ठैकत्वसंख्या प्रतीयते। कोष्ठद्वयस्यैकांकद्वयपरस्पर-योजननि:पन्नद्वितीयांकेन चैकवर्णवृत्तभेदस्य द्वित्वरूपा समस्ता संख्या प्रतीयते, इतीयं कोष्ठद्वयात्मिका प्रथमा एकवर्णमेरुपंक्ति:।

एवमेतत्पंक्त्यधोरेखां पार्श्वयोर्मनागवर्द्धयित्वा अंगुष्ठमात्रं मध्यदेशं त्यक्त्वा अधस्तादेका रेखा उपरितनरेखासमाना कार्या, पार्श्वयोश्च ऋजुरेखया मेलनं कार्यमेवमेकमायतं कोष्ठं विधाय तत्र उपरि-तनप्रथमकोष्ठस्याधोरेखामध्यदेशमारभ्याधस्तनरेखापर्यंतमेका ऋजु-रेखा देया, तत: द्वितीयकोष्ठाधोरेखामध्यमारभ्याधस्तनरेखापर्यंत-मेका ऋजुरेखा देया, एवं कोष्ठत्रयं संपाद्य प्रथमान्त्यकोष्ठयो: प्रत्येकमेकैकोऽंको देय:, अंतरालवर्त्ती च द्वितीय: कोष्ठ: शिर:-

स्यैकाङ्कद्वययोजनमितपञ्चद्वितीयाङ्केन पूरणीयः, तत्र द्व्यक्षरवृत्तभेदेषु द्विगुरुरेको भेद इति निर्द्धारितद्वित्वसंख्याकगुरुयुक्तद्व्यक्षरवृत्तभेदनिष्ठैकत्वरूपसंख्या प्रथमकोष्ठस्यैकाङ्केन प्रतीयते । ततो द्वितीयकोष्ठस्य द्वितीयाङ्केन द्व्यक्षरस्यैकगुर्वेकलघुयुक्तौ द्वौ भेदाविति निर्द्धारितैकत्वसंख्याकगुरुलघुयुक्तद्व्यक्षरभेदनिष्ठद्वित्वरूपसंख्या प्रतीयते । ततस्तृतीयकोष्ठस्यैकाङ्केन द्व्यक्षरस्य द्विलघुरेको भेद इति निर्द्धारितद्वित्वसंख्याकलघुयुक्तद्व्यक्षरभेदनिष्ठैकत्वरूपसंख्या प्रतीयते । कोष्ठत्रयस्थसमस्ताङ्कयोजनमितपञ्चचतुर्थाङ्केन च चतुष्टयरूपा समस्तभेदसंख्या निर्णीयते, सेयं कोष्ठत्रययुक्ता द्व्यक्षरमेरुपङ्क्तिर्द्वितीया ।

एवमेतत्पङ्क्त्यधोरेखां पार्श्वयोर्मनाग्वर्द्धयित्वैकाङ्गुलमात्रमध्यदेशं त्यक्त्वोपरितनरेखासमानाधस्ताद्रेखा कार्या, पार्श्वयोश्च ऋजुरेखया मेलनं कार्यमेवमेकं दीर्घं कोष्ठं निर्माय तत्र उपरितनप्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधोरेखापर्यन्तमेका ऋजुरेखा देया, ततो द्वितीयकोष्ठाधोरेखामध्यमारभ्याधोरेखापर्यन्तमेका ऋजुरेखा देया, ततस्तृतीयकोष्ठाधोरेखामध्यमारभ्याधोरेखापर्यन्तमेका ऋजुरेखा देया, एवं कोष्ठचतुष्टयं सम्पाद्य तत्राद्यन्तकोष्ठयोः प्रत्येकमेकैकोऽङ्को देयस्तदनन्तरमस्य द्वितीयकोष्ठस्य च तच्छिरःस्थैकद्वितीयैत्येकद्वययोजनमितपञ्चतृतीयाङ्केन पूरणं कार्यं, तृतीयकोष्ठस्य च तच्छिरःस्थद्वितीयैकेत्येकद्वययोजनमितपञ्चतृतीयाङ्केन पूरणं कार्यं तत्र प्रथमकोष्ठस्यैकाङ्केन त्र्यक्षरस्य त्रिगुरुरेको भेद इति निर्द्धारितत्रित्वसंख्याकगुरुयुक्तत्र्यक्षरवृत्तभेदनिष्ठैकत्वरूपसंख्या प्रतीयते । द्वितीयकोष्ठस्थतृतीयाङ्केन च त्र्यक्षरस्य द्विगुर्वेकलघुयुक्तभेदत्रय-

मिति निर्द्धारितद्वित्वैकत्वसंख्याकगुरुलघुयुक्तत्र्यक्षरभेदनिष्ठत्रित्वरूपसंख्या निश्चीयते। एवं तृतीयकोष्ठस्थतृतीयांकेन [त्र्य]क्षरस्यैकगुरुद्विलघुयुक्तं भेदत्रयमिति निर्द्धारितैकत्वद्वित्वसंख्याकगुरुलघुयुक्तत्र्यक्षरभेदनिष्ठक[त्रित्व]रूपसंख्या निश्चीयते। एवं चतुर्थकोष्ठस्यैकांकेन त्र्यक्षरस्य त्रिलघुयुक्त एको भेद इति निर्द्धारितत्रित्वसंख्याकलघुयुक्तत्र्यक्षरभेदनिष्ठैकत्वरूपसंख्या प्रतीयते। कोष्ठचतुष्टयस्थसर्वांकयोजननिष्पन्नाष्टमांकेन च त्र्यक्षरस्याष्टौ भेदा इति समस्ता त्र्यक्षरवृत्तभेदसंख्या निश्चीयते, सेयं तृतीया कोष्ठचतुष्टययुक्ता तृतीयाक्षरमेरुपंक्तिः।

एवं पूर्वोक्तरीत्यैकं दीर्घं कोष्ठं निर्माय तत्र कोष्ठपंचकं विधाय प्रथमांत्ययोः कोष्ठयोरेकैको देयः, अंतरालस्थस्य द्वितीयकोष्ठस्य शिरःस्थैकतृतीयेत्यंकद्वययोजननिःपन्नचतुर्थाङ्केन पूरणं विधेयं, तृतीयकोष्ठस्य च शिरःस्थतृतीयाङ्कद्वययोज[न]निःपन्नषष्ठांकेन पूरणं विधेयं, चतुर्थकोष्ठस्य च शिरःस्थतृतीयैकेत्यंकद्वययोजननिःपन्नचतुर्थांकेन पूरणं विधेयं, तत्र प्रथमकोष्ठस्यैकांकेन चतुरक्ष[र]वृत्तस्य चतुर्गुरुरेको भेद इति निर्द्धारितचतुष्टसंख्याकगुरुयुक्तचतुरक्षरवृत्तभेदनिष्ठैकत्वसंख्या प्रतीयते। द्वितीयकोष्ठस्थचतुर्थांकेन च चतुरक्षरस्य त्रिगुर्वेकम[ल]घुयुक्तं भेदचतुष्टयमिति निर्द्धारितत्रित्वैकत्वसंख्याकगुरुलघुयुक्तचतुरक्षरभेदनिष्ठचतुष्टरूपसंख्या प्रतीयते। ततस्तृतीयकोष्ठस्थषष्ठांकेन चतुरक्षरस्य द्विगुरुद्विलघुयुक्ताः षड्भेदा इति निर्द्धारितद्वित्वसंख्याकगुरुलघुयुक्तचतुरक्षरभेदनिष्ठषट्संख्या प्रतीयते। ततः चतुर्थकोष्ठस्थचतुर्थांकेनैकगुरुत्रिलघुयुक्तं चतुरक्षरस्य भेद-

चतुष्टयमिति निर्द्धारितैकलत्रिलसख्याकगुरुद्वयुक्तचतुरचरभेद निष्टचतुष्टय(क)पसख्या निश्चीयते। तत पचमकोष्ठस्थैकाकेन चतुर्लघुयुक्तचतुरचरस्यैको भेद इति निर्द्धारितचतुष्टमसख्याकलघुयुक्तचतुरचरभेदनिष्टैकलरूपसख्या निश्चीयते। कोष्ठपचकनिष्ठसर्वांकयोजननि पन्नषोड़शाकेन च षोड़शरूपा समस्ता चतुरचरभेदसख्या प्रतीयत, सेय पचकोष्ठयुक्ता चतुर्थी चतुरचरमेरुपङ्क्तिः ।

एव पूर्वोक्तरीत्या एक दीर्घ कोष्ठ विधाय तच कोष्ठषट्क निर्माय प्रथमांत्यकोष्ठयोरेकैकाः को देय, अतरालस्थद्वितीयकोष्ठस्य शिर स्थैकचतुर्थेत्यकद्वययोजननि पन्नपचमाकेन पूरण विधेय। ततस्तृतीयकोष्ठस्य शिर[ ]स्थचतुर्थषष्ठेत्यकद्वययोजननि पन्नदशमाकेन पूरण विधेय। ततश्चतुर्थकोष्ठस्य शिर स्थपष्ठचतुर्थेत्यकद्वययोजननि पन्नदशमाकेन पूरण विधेय। तत पचमकोष्ठस्य शिरःस्थ चतुर्थैकेत्यकद्वययोजननि पन्नपचमाकेन पूरण विधेय। तच प्रथमकोष्ठस्थैकाकेन पचाचरवृत्तस्य पचगुरुरेको भेद इति निर्द्धारितपचलसख्याकगुरुयुक्तपचाचरभेदनिष्टैकलसख्या निश्चीयते। तत द्वितीयकोष्ठस्थपचमाकेन च पचाचरवृत्तस्य चतुर्गुर्वेकलघुयुक्त भेदपचकमिति निर्द्धारितचतुरेकलसख्याकगुरुलघुयुक्तपचाचरभेदनिष्टपचलसख्या निश्चीयते। ततस्तृतीयकोष्ठस्थदशमाकेन पचाचरवृत्तस्य त्रिगुरुद्विलघुयुक्त भेददशकमिति निर्द्धारितत्रिलद्विलसख्याकगुरुलघुयुक्तपचाचरभेदनिष्टदशलसख्या मौलिनि श्चीयते। ततश्चतुर्थकोष्ठस्थदशमाकेन पचाचरवृत्तस्य द्विगुरुत्रिलघुयुक्त भेददशकमिति निर्द्धारितद्विलत्रिलसख्याकगुरुलघुयुक्तपचाचरभेदनिष्ट-

दृशलसंख्या निश्चीयते । ततः पंचमकोष्ठस्थपंचमांकेन पंचाचरवृत्तस्य एकगुरुचतुर्लघुयुक्तं भेदपंचकमिति निर्द्धारितैकलचतुष्कसंख्याकगुरु-लघुयुक्तपंचाचरभेदनिष्ठपंचलसंख्या निश्चीयते। ततः षष्ठकोष्ठ-स्थैकांकेन पंचाचरवृत्तस्य पंचलघुयुक्त एको भेद इति निर्द्धारित-पंचलसंख्याकलघुयुक्तभेदनिष्ठैकलसंख्या निश्चीयते। कोष्ठषट्कनिष्ठ-सर्वांकयोजननिःपन्नद्वात्रिंशत्तमांकेन च द्वात्रिंशद्रूपा समस्ता पंचा-चरवृत्तभेदसंख्या प्रतीयते। एवमग्रेऽपि सुधीभिः स्वयमूह्यं, ग्रन्थ-विस्तरभयान्न लिख्यते ॥ (E).

४२। अथ कियंतः सर्वगुर्वेकगुरु-द्विगुरु-त्रिगुर्वादयः, एवं कियंतः सर्वलघ्वेकलघु-द्विलघ्वादय इति ज्ञानार्थं मेरुमाह, अक्खर। अचरसंख्यया कोष्ठान् कुरु, आद्यमंत्यं च प्रथमांकेन पूरय। शीर्षद्वयांकेनापरं भर, जानीत सूचीमेरुं निःशंकम् ॥ आद्यं कोष्ठमिति शेषः, तथाच सर्वत्र आद्यांत्यकोष्ठयोरेक एव लेख्यः, शीर्षकोष्ठद्वयरूपांकेन रिक्तकोष्ठं पूरयेत्यर्थः। तथाच एकाचरादौ दृष्टमेरुसंख्यया द्व्यादिकोष्ठानर्द्धान्तरितानेकैकवृद्ध्या लिखेत्। तत्र सर्वकोष्ठाद्यंतयोरेकं दत्त्वा पश्चादुपरितनं कोष्ठद्वयांकं शृंखला-वंधन्यायेनैकीकृत्यावशिष्टाः कोष्ठाः पूरणीयाः॥ तत्र एकाचर-प्रस्तारे एकः सर्वगुरुः, एकः सर्वलघुरिति भेदद्वयमेव सिद्धं, तस्य द्विभेदत्वात् ॥ द्व्यचरप्रस्तारे एकः सर्वगुरुः, द्वौ एकगुरू, एकः सर्व-लघुरिति ॥ एवं त्र्यचरप्रस्तारे एकः सर्वगुरुः, त्रय एकगुरवः, त्रयो द्विगुरवः, एकः सर्वलघुरिति ॥ एवं सर्वत्र प्रस्तारे एकः सर्वलघुः, त्रय एकलघवः, त्रयो द्विलघवः, एकः सर्वगुरुरित्यादि सर्वत्र

कार्यं, पूर्व्वाङ्क एवात्र पराङ्क उच्यते, अङ्कस्य वामा गतिरित्युक्त-त्वात् । एवमपराङ्केण सह योजनं, ततस्तत्पराङ्केण प्राप्तास्याङ्का अधो-ऽधः स्थाप्याः, एवमेकगुरोर्द्वितीया पंक्तिः कार्य्या, तत्र च प्रथम-लिखिताङ्कपृष्ठतो योऽङ्कः स उपरि लेख्यः, ततश्च उपरिस्थिताङ्केन सह योजयित्वाऽधो लेख्यः, पुनस्तत्पूर्व्वस्थिताङ्केन सह योजयित्वा । एवं द्विगुरुपंक्तिं समाप्य त्रिगु[रु]पंक्तिर्लेख्या, द्विगुरूपरिस्थिताङ्क-पृष्ठस्थाङ्क उपरि स्थाप्यस्तत्पृष्ठस्थाङ्केन सह योजयित्वा तदधो लेख्यः, पुनः पराङ्केण योजयित्वा तदधो लेख्यः । एवमग्रेऽपि परतो-दीयते इत्यस्याधो लिख्यत इत्यर्थः इति गुरूपदेशः । उत्तरोत्तर-द्विगुणा अङ्काः कियद्दूरं देया इत्याकांक्षायामुक्तं प्रस्तारसंख्यये-त्यादि, तेन यावदक्षरस्य प्रस्तारस्तावत्पर्यन्तं द्विगुणाङ्कदानं, ताव-त्पंक्तिपताका भवतीति बोध्यम् । यत्तु यावती प्रस्तारसंख्या ताव-दङ्का देया इत्यर्थः इति तन्न, पताकाया यावदङ्कासम्भवात्, तत-एकन्यूनाङ्कस्यैव सम्भवात् ।

अथोदाहरणेन स्पष्टीक्रियते। चतुरक्षरप्रस्तारे एकगुर्वादयः कुत्र पतन्तीति प्रश्ने, चतुर्षु स्थानेषु उत्तरोत्तरद्विगुणा-अङ्काः स्थाप्याः यथा १,२,४,८, तत्र चैकगुरुपंक्तौ प्रथमतोऽष्टाङ्कः स्थाप्यः, अष्टाङ्कचतुरङ्कयोजना-द्वादशाङ्कः स तदधः स्थाप्यः १२, द्वादशाङ्कद्वया-ङ्कयोजनाच्चतुर्द्दशाङ्कः स तदधो लेख्यः १४, चतु-र्द्दशैकाङ्कयोजनात्पञ्चदशाङ्कः स तदधो लेख्यः १५, एवमेकगुरुकस्यैका पंक्तिः । अथ द्विगुरुकपंक्तौ अष्टाङ्कपृष्ठवर्त्ती

| १ | २ | ४ | ८ | |
|---|---|---|---|---|
| १ | २ | ४ | | १६ |
| | ३ | ६ | १२ | |
| | ५ | ० | १४ | |
| | ९ | १० | १५ | |
| | | ११ | | |
| | | १३ | | |

पंचमाष्टमांकयोजननिःपन्नस्त्रयोदशांकः सप्तमांकादधः स्थाप्यः, एवं द्वितीयादिचतुर्णामंकानां चतुर्थांके योजनं कृत्वा द्वितीयाष्टमांकयोजननिःपन्नो दशमांकस्त्रयोदशांक[ा]दधः स्थाप्यस्ततः तृतीयाष्टमयोजननिःपन्न एकादशांको दशमांकादधः स्थाप्यः, ततः पंचमाष्टमयोजननिःपन्नस्त्रयोदशांकः प्रथमप्राप्तो निःपद्यते इति तयोर्योजनं न कार्यं, नवमाष्टमयोजननिःपन्नः सप्तदशो नवमषोडशयोजननिःपन्नः पंचविंशतितमश्चांकः प्रस्तारसंख्यातोऽधिकसंख्याको निःपद्यते इति तद्योजनं न कार्यम् । एवं द्वितीयाद्यंकानां चतुर्थाष्टमांकयोर्योजनं कृत्वा चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशेति षडंकैः तृतीयस्थानकोष्ठपङ्क्तिः कल्पनीया, ततश्चतुर्थादयः षडंका अष्टमांकपूर्व[व]र्त्तिन इति तेषां तत्र योजने चतुर्थाष्टमयोजननिःपन्नो द्वादशांकोऽष्टमांकादधः स्थास्ततः षष्ठाष्टमांकयोजननिःपन्नश्चतुर्दशोऽंको द्वादशांकादधः स्थाप्यस्ततः सप्तमाष्टमयोजननिःपन्नः पंचदशोऽंकश्चतुर्दशांकादधः स्थाप्यस्ततस्त्रयोदशदशैकादशांकानामष्टमांकयोजने, अष्टमादीनां च षोडशांकयोजने प्रस्तारसंख्यातोऽधिकसंख्याका अंका निःपद्यंते अतस्तेषां तत्र योजनं न कार्यमेवं चतुर्थाष्टमांकयोर्योजनं कृत्वाष्टमद्वादशचतुर्दशपंचदशेति चतुर्भिरंकैश्चतुर्थस्थानकोष्ठपङ्क्तिः कल्पनीया । पंचमस्थानकोष्ठकं षोडशांकयुक्तं कल्पनीयम् । एवं चतुर्वर्णवृत्तपताकायां कोष्ठस्थानपंचकं कल्पनीयं, तत्स्वरूपं लिखित्वा प्रदर्श्यते — [ Vide figure p. 73—Ed.] एवं च चतुर्वर्णमेरुपङ्क्तिवर्त्तिप्रथमकोष्ठस्थैकांकनिर्द्धारितचतुर्गुरुयुक्तत्वरूपैकत्वसंख्याकस्य भेदः प्रथम इति [प्राति]स्विकं रूपं पताकाप्रथम-

कोष्ठस्थकाङ्केन निर्द्धार्य्यते चतुर्गुरुयुक्त एको भेद प्रथम इति। एवं चतुर्वर्णमेरुपङ्क्तिवर्त्तिद्वितीयकोष्ठस्थचतुर्थाङ्कनिर्द्धारितैकलघुत्रिगुरुयुक्तत्वस्वरूपचतुःसंख्याकानां भेदानां द्वितीयतृतीयपञ्चमनवमेति प्रातिस्विकं रूपं चतुर्वर्णपताकाद्वितीयस्थानकोष्ठपङ्क्तिवर्त्तिभिश्चतुर्भिरङ्कैर्निर्द्धार्य्यते एकलघुत्रिगुरुयुक्ताश्चत्वारो भेदा द्वितीयतृतीयपञ्चमनवमरूपा इति। एवं चतुर्वर्णमेरुपङ्क्तिवर्त्तितृतीयकोष्ठस्थषडङ्कनिर्द्धारितद्विगुरुद्विलघुयुक्तत्वस्वरूपषट्संख्याकानां भेदानां चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशेति प्रातिस्विकं रूपं पताकातृतीयस्थानकोष्ठपङ्क्तिवर्त्तिभिः षड्भिरङ्कैर्निर्द्धार्य्यते द्विगुरुद्विलघुयुक्ताः षड् भेदाश्चतुर्थषष्ठसप्तमत्रयोदशदशमैकादशरूपा इति। एवं चतुर्वर्णमेरुपङ्क्तिवर्त्तिचतुर्थकोष्ठस्थचतुर्थाङ्कनिर्द्धारितैकगुरुत्रिलघुयुक्तत्वस्वरूपचतुःसंख्याकानां भेदानामष्टमद्वादशचतुर्दशपञ्चदशेति प्रातिस्विकं रूपं पताकाचतुर्थस्थानकोष्ठपङ्क्तिवर्त्तिभिश्चतुर्भिरङ्कैरवधार्य्यते एकगुरुत्रिलघुयुक्ताश्चत्वारो भेदा अष्टमद्वादशचतुर्दशपञ्चदशरूपा इति। एवं चतुर्वर्णमेरुपङ्क्तिवर्त्तिपञ्चमकोष्ठस्थैकाङ्कनिर्द्धारितचतुर्लघुयुक्तत्वस्वरूपैकत्वसंख्याकस्य भेदस्य षोडश इति प्रातिस्विकं रूपं पताकापञ्चमकोष्ठस्थषोडशाङ्केन निर्द्धार्य्यते चतुर्लघुरेको भेदः षोडशेति। एवमन्यत्रापि पताका बोध्या। ग्रन्थविस्तरभयान्न लिख्यते॥ (E)

४४। अथ वर्णपताका। पूर्वं मेरौ अमुकगुरुका अमुका भेदा भवन्तीत्युक्तं, ते च भेदाः प्रस्तारे अमुकस्थानेषु तिष्ठन्तीति ज्ञानार्थं पताकामाह॥ उद्दिष्टा। तत्र मेरौ यावती गुर्वादिकसंख्या भवि-

ष्यति तावंत्येव कोष्ठकानि पताकायां लेखनीयानीति युक्त्या सिध्यति॥ उद्दि॥ उद्दिष्टसदृशानंकान्देहि, पूर्वांकेण परभरणं कुरु। प्राप्तमंकं प्रथमं परित्यज्य प्रस्तारसंख्यया पताकां गृहाण॥ अथमर्थः। आदौ तावत् यत्संख्याकवर्णवृत्तस्य[?] पताका चिकीर्षिता तत्संख्याका उद्दिष्टवदुत्तरोत्तरं द्विगुणिता एकपंक्त्यंकाः स्थाप्याः, पश्चान्मेरुप्रस्तारांकसंख्यया पताकाकोष्ठा वर्द्धनीयाः॥ ततः क्रमात्पूर्वाग्रिमकोष्ठस्थांकयोगस्तले लेख्यः इति पताका पूर्यतां॥ एतदुक्तं॥

एको द्वावथ चत्वारः ततोऽष्टाविति वर्द्धनं।
पूर्वं परेण संयुज्य तदधो लेखयेद्बुधः॥
अंतिमांकावधिं नैव लंघयेदत्र कुत्रचित्।
एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्॥

इति वर्द्धनं यावद्विकल्पं॥ अत्रोदाहरणमेकाक्षरे १। २। अस्य द्विविकल्पत्वादेकस्थानस्य एकगुरुः, द्वितीयस्य एकलघुरित्येतावतैव सिद्धिः। सर्वत्राद्यांतांकौ सर्वगुरुलघुवाचकौ बोध्यौ॥ द्व्यक्षरे यथा,

| | | |
|---|---|---|
| १ | २ | ४ |
| | ३ | |

अत्रैकांकद्व्यंकयोर्योगे त्र्यंको द्व्यंकाधो लेख्यः॥ तस्य चतुर्विकल्पत्वात् तावतैव सिद्धिः। आद्यस्थान एव सर्वगुरुः, द्वितीयद्विपंक्तिस्थौ द्वित्र्यंकौ एकगुर्वेकलघू, चतुर्थोऽंकः सर्वलघुरिति॥ चतुरक्षरे यथा॥ [Vide figure p. 73—Ed.] अत्रैको द्वाभ्यां सह त्रयं द्व्यंकाधः, एकश्चतुर्भिः सह पंच त्र्यंकाधः, एकाष्टयोगे नव पंचाधः, द्विचतुर्योगे षट् चतुरधः, द्व्यष्टयोगे दश ष[ड़]धः, द्विषोड़शयोगे न संभवति, त्रिचतुर्योगे सप्त दशाधः, पंचचतुर्योगे नव एकत्र लिखितत्वान्न लेख्यः, त्र्यष्टयोगे एकादश

अह मत्ता मेरु ।[1]

दुइ दुइ कोट्टा सरि लिहहु[2]
पढ़म अंक[3] तसु अंत ।
तसु आइहि पुण[4] एक्क[5] सउ[6]
पढमे[7] वेवि मिलत ॥ ४५ ॥ दोहा ।
सिर अंके तसु सिरपर
अंके[8] उवरल कोट्ठ[9] पुरह[10] णिस्संके[11] ।
मत्ता मेरु अंक संचारि वुज्झह[12]
वुज्झह[12] जण दुइ[13] चारि ॥४६ ॥ [सिंहिणी ?]

सप्ताध, त्रिषोडशयोगा न, पञ्चाष्टयोगे त्रयोदश एकादशाध', चतुरष्टयोगे द्वादशाष्टाध, चतु षोडशयोगो न, षडष्टयोगे चतुर्दश दाद्शाध, दशाष्टयोगो न, सप्ताष्टयोगे पञ्चदश चतुर्दशाध । अथाद्य' सर्वगुरु, द्वितीयपङ्क्तिका एकलघुस्थानानि, तृतीयपङ्क्तौ द्विलघुस्था-नानीत्यादि ज्ञेय। यथा आद्यस्थाने सर्वगुरु', द्वित्रिपञ्चनवस्थाने[षु] एकलघवस्त्रिगुरवो वा, चतु षट्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विलघवो द्विगुरवो वा, अष्टद्वादशचतुर्दशपञ्चदशस्थानेषु त्रिलघव एकगुरवो वा, षोडशस्थाने सर्वलघुरित्येव सर्वत्र ज्ञेयम् ॥ (G)

४५–४६ । १ अथ मत्ता मेरु (C) अथ मात्रामेरु (A, D E & F) २ लिखहु (D) करहु (F) ३ पढमहु (C) ४ पुणु (A) पुणि (D), dropt in (F) ५ एक (C) एक (D) ६ दउ (C) धरि (D) ७ विढमे (E) dropt in (F) ८ अंको (E) ९ कोट्ठा (B) कोट्ठ (E) कोट्ठय (F) १० पूरह (D), पूरहु (E & F) ११ निसंक (B) निसंक (C) णीसंके (D & E) णीसंक (F) १२ बुज्झहु (D & E) बुझउ (F) १३ दुइ (E)

४५-४६। अथ मात्रामेरुः। द्वयं द्वयं कोष्ठं समं लिख, प्रथमो-ऽकस्तस्यान्ते। तस्यादौ पुनरेकं दत्त्वा [प्रथमं] द्वावपि मिलितौ॥ शिरोऽङ्के तस्य शिर उपर्यङ्केण कोष्ठं पूरय निःशङ्कम्। मात्रामेरोरङ्कं संचार्य बुध्यन्तां [बुध्यन्तां] जना विचक्षणः॥ मेरोस्तु प्रयोजनं द्विकलादौ प्रस्तारसंख्याज्ञानं सर्वगुर्वादिज्ञानञ्च। तथाहि यदि पृच्छ्यते द्विकलस्य कियान् प्रस्तारः सर्व्वगुरुः, सर्व्वलघुर्वा कियान्, एवं त्रिकलस्य कियान् प्रस्तारः सर्वगुरुः, सर्वलघुर्वा कियान् इत्येव-मादिप्रश्ने तज्ज्ञानं मेरोः प्रयोजनं, तत्र चायं प्रकारः। प्रथमतः कोष्ठद्वयं लेख्यं तदधः कोष्ठद्वयं लिखित्वा तदधः कोष्ठद्व[त्र]यं पुनरपि कोष्ठत्रयमधो लेख्यं, ततः कोष्ठचतुष्टयं लिखित्वा तदधोऽपि कोष्ठ-चतुष्टयं लेख्यमेवं कोष्ठलिखनं कृत्वा तत्राङ्का देया भवन्ति। तत्र चायं प्रकारः। सर्व्वेषां कोष्ठानामन्ते प्रथमाङ्को देयः, प्रथमाङ्क-शब्देनैकाङ्क उच्यते। ततश्च समीकृतकोष्ठयुग्मकानामादिमकोष्ठे सर्वत्रैकाङ्को देयस्तदधस्तनकोष्ठादौ च दद्यादङ्कः। तत्रेयं युक्तिः। उपरिस्थिताङ्क एकस्तत्परतश्चैकः, इत्यधस्ताद्द्वयाङ्को लिखितः। एवं द्वितीयकोष्ठयुग्मस्यादिमकोष्ठकादावेकाङ्कोऽस्ति तदुपरि द्वयाङ्क-इति मिलित्वा त्रयाङ्कोऽधस्ताल्लेख्यः। एवं तृतीयकोष्ठयुग्मकस्यादावे-काङ्कस्तदुपरि च त्रयाङ्क इति मिलित्वा चतुरङ्कोऽधस्ताल्लेख्य इति। प्रथमे द्वयोर्मिलनार्थमत्र प्रथमशब्देन द्वितीयकोष्टकादिगृह-मुच्यते। अथावशिष्टगृहणानां[गृहाणां]। तत्र च प्राथमिककोष्ठ-युग्मके पूरणीयमेव नास्ति, द्वितीयकोष्ठ[युग्म]स्य मध्यगृहं पूरणीयं, तत्रायं प्रकारः, शून्यगृहस्योपरिस्थितो द्वयाङ्कस्तदुपरिस्थितद्वितो-

यग्टङ्के चैकाङ्क इति मिलित्वा चय, तेन मध्यमकोष्ठे चयाङ्को लेख्य। तदधोऽग्टङ्क रिक्तमस्ति, तदुपरिस्थितस्य चयाङ्कस्य तदुपरिद्वितीयग्टङ्कस्थितैकाङ्कयोजनात् चतुरङ्को जात, स तदधो लेख्य। हतीयकोष्ठयुग्मप्रथमपक्ती मध्यमकोष्ठदय रिक्तमस्ति, तच चैकस्योपरि चयाङ्को द्वितीयग्टङ्के च चयाङ्कस्तयोर्मिलनाच षड्ङ्क, स तच लेख्य, तदपरकोष्ठस्योपरि चतुरङ्कस्तदुपरिस्थितद्वितीयग्टङ्के चैकाङ्क इति मिलित्वा पञ्चाङ्क, स तच लेख्य। तदधच कोष्ठद्वय रिक्तमस्ति, तत्रादिग्टङ्कस्योपरि षड्ङ्कस्तदुपरिस्थितद्वितीयग्टङ्के च चतुरङ्क इति मिलित्वा दशाङ्कस्तच लेख्य, तदपरकोष्ठस्य उपरि पञ्चाङ्कस्तदुपरिस्थितद्वितीयग्टङ्के चैकाङ्क इति मिलित्वा षड्ङ्क, स तच लेख्य इति शिर अङ्केत्यादेरर्थ।

अथ प्रश्नस्योत्तरदान प्रकटीक्रियते। तच द्विकलस्य कियान् प्रस्तार इति प्रश्ने, प्रथमग्टङ्के एकाङ्क परग्टङ्के चैकाङ्क इति मिलित्वा द्वय, तेन द्विकलस्य प्रस्तारद्वयमिति वाच्यम्। द्विकले सर्वगुरु कियानिति प्रश्ने प्रथम एकाङ्कसत्त्वात्सर्वगुरुरेक इति वाच्यमन्ते चैकाङ्कसत्त्वात्सर्वलघुरेक इति वाच्यम्। चिकले कियान् प्रस्तार इति प्रश्ने प्रथमग्टङ्के द्वयाङ्क परग्टङ्के चैकाङ्क इति मिलित्वा चयमिति। चिकले एकगुरु कियानिति प्रश्ने प्रथमतो द्वयाङ्कसत्त्वादेकगुरुद्वयमिति वाच्यम्। चिकले सर्वलघु कियानिति प्रश्ने, अन्ते एकाङ्कसत्त्वात्सर्वलघुरेक इति वाच्यम्। सर्वलघुकथनमेव बोध्यम्। एव चतुष्कले कियान् प्रस्तार इति प्रश्ने, हतीयकोष्ठके एकचयमेक इति मिलित्वा पञ्चाङ्कसत्त्वात्प्रस्ता[र]पञ्चकमिति

वाच्यम् । चतुष्कले सर्व्वगुरुः कियानिति प्रश्ने, प्रथमत एकाङ्क-सत्त्वादेक इति वाच्यम् । चतुष्कले एकगुरुः कियानिति प्रश्ने, परन्त्वेह त्रयाङ्कसत्त्वादेकगुरुत्रयमिति वाच्यम् । एवं पञ्चकलो-[ले] कियान् प्रस्तार इति प्रश्ने, चतुर्थकोष्ठे मिलित्वाऽष्टाङ्क-सत्त्वादष्टाविति वाच्यम् । तत्र च प्रथमतस्त्रयाङ्कसत्त्वाद्द्विगुरुत्रय-मिति वाच्यम् । परन्त्वेह चतुरङ्कसत्त्वादेकगुरुकचतुष्टयमिति वाच्यम् । एवं षट्कले मिलित्वा त्रयोदशाङ्कसत्त्वात् त्रयोदश प्रस्तारा-इति वाच्यम् । प्रथमत एकाङ्कसत्त्वादेकसर्व्वगुरुरिति वाच्यम् । परन्त्वेह ष[ड्]ङ्कसत्त्वाद्द्विगुरुषट्कं, ततश्च पञ्चाङ्कसत्त्वादेकगुरुपञ्चक-मेवमग्रेऽपि बोध्यम् । एवमसंख्यातमानेतुं शक्यते इति सप्तकलोऽपि लिखितः । (C). [Vide figure p. 88.—Ed.]

४५-४६ । अथ मात्रामेरुप्रकारमाह दुइ दुइ कोट्ठेति । दुइ दुइ—द्वयोर्द्वयोः कलयोरिति शेषः, कोट्ठा—कोष्ठकानि, सरि—सदृशानि समसंख्याकानीति यावत्, लिहहु—लिखत । एककलप्रस्ताराभावात् द्विकलमारभ्य मेरूत्पत्तिः, एवं च द्वितीय-तृतीयेति द्वयोः कलयोः प्रत्येकं कोष्ठद्वयम् ऊर्द्धाधःस्थित्या पर-स्परसंश्लिष्टं, चतुर्थपंचमेति द्वयोः कलयोः प्रत्येकं कोष्ठत्रयमूर्द्धाधः-स्थित्या परस्परसंश्लिष्टं, षष्ठसप्तमेति द्वयोः कलयोरूर्द्धाधःस्थित्या परस्परसंसक्तं प्रत्येकं कोष्ठचतुष्टयमित्यादिरीत्या द्वयोर्द्वयो कलयोः समसंख्याकान्यूर्द्धाधःस्थित्या परस्परसंसक्तानि कोष्ठकानि उत्तरो-त्तरं वर्द्धितानि गुरूपदेशात् कल्पनी[नी]यानीति निर्गलितार्थः । अत्र कोष्ठसादृश्यं समसंख्याकत्वमेव । तसु—तेषु कोष्ठेषु, अंत—

अतिमे कोष्ठे इत्यर्थ, पढम श्रक—प्रथमोऽक स्थाप्य इति शेष, तस्य आइहि—तेष्वाद्येषु कोष्ठेषु मध्ये [पुन] विषमे प्रथमतृतीय पञ्चमसप्तमादिकोष्ठेषु, एक्क—एक' अक स्थाप्य इत्यनुषग'। कचिदि-यमे इत्यस्य स्थाने पढमे इति पाठ, तत्र समादित्यध्याहृत्य योज्यम्, एव च समाग्रमे पूर्ववर्त्तिनि विषमे इति, स एवार्थ, यत समात्पूर्ववर्त्ती विषम एवेति, सउ—समेषु द्वितीयचतुर्थषष्ठाष्ट-मादिषु कोष्ठेषु, बेवि मिलन—द्वौ मिलितौ पूर्वाकाविति शेष, स्थापयेत्यनुषग । आद्या ये विषमा कोष्ठास्तेष्वेकाको देय', ये समास्तेषु पूर्ववर्त्त्यकद्वययोजनानि पन्नोऽको देय इत्यर्थ । तत उवरन्न कोट्ठ—उर्वरितानि आवृतातरालस्थितानि कोष्ठकानीत्यर्थ । सिर श्रके तसु सिरपर श्रके—शिरोऽका तच्छिरउपर्यकाभ्या, पौरक-[के]—निशक यथा स्यात्, पूरहिं [इ]—पूरय एव श्रक मत्तारी [रि]—श्रकान् मत्तार्थ सस्थाप्य जण दुइ चारि—जना द्विचतार', मत्ता मेरु—मात्रामेरु जाणहु [बुज्झहु] बुध्यध्वम् इति योजना ।

अथैतन्निमाणप्रकारो लिख्यते। एककलप्रस्ताराभावात् द्वि-कलमारभ्य मेरुप्रवृत्ति'। एव च प्रथम वामदक्षिणयोरि[रे]खाङ्गुल मात्रदीर्घे मध्ये रेखाभूतमर्द्धमधय ङ्गुलमात्रमतर विहायो-र्द्धाधो रेखाद्वय कार्य, ततस्तत्पार्श्वद्वयमेलनम् ऋजुरेखया कार्यम् एव दीर्घकोष्ठद्वय विधाय तत्र प्रथमरेखामध्यदेशमारभ्याधस्तन-तृतीयरेखामध्यदेशपर्यंतम् एकाम् ऋजुरेखां दत्त्वा प्रथमस्थाने ऊर्द्धाध स्थिता परस्परसमक्र कोष्ठक[द्व]यद्वय कार्य, तत्रातिम-कोष्ठयो' प्रत्येकमको देय, आद्ये उपरितने प्रथमे च विषमता-

पढम होइ णव विप्पगण ओहल[1] कण्ण ठवेहु ।
गाहा[2] अद्धा अंत दइ[3] माला छंद कहेहु[4] ॥ १६५[5] ॥
दोहा ।

---

१६४ । अथ मालावृत्तं लक्षयति पढमेति । हे मृगिवदने मृगनयने यत्र पढम चरण — प्रथमचरणे णव द्विअगण — नव दिजगणा[1] नव चतुर्लघ्वात्मिका गणा पअल — पतति, पुणवि — पुनरपि नवदिजगणानन्तरमित्यर्थं तह — तथा रअण ठव — रगणं मध्यलघुगणं स्थापय अतए — अन्ते रगणान्ते पादान्ते वा कणो — कर्णो गुरुद्वयात्मको गणः पतति इति शेषः, तत गाहस्स — गाथाया सेसम्मि — शेषे उत्तरार्द्धमिति यावत् पततीत्यनुषङ्गः, सा माला हि — तन्नामनामकं वृत्तमिति पिङ्गल णाअ — पिङ्गल नाग भणता भणति ॥ (I)

१६४ । अथ मालामाह ॥ पढमेति ॥ प्रथमे चरणे मृगिवदने मृगनयने नव द्विजाः पतन्ति, पुनरपि ततो रगणं स्थाप्योऽन्ते कर्णः । पिङ्गलनागो भणति मालां शेषे विगाथाया ॥ द्विजचतुर्लघुः, द्वितीये सप्तविंशतिर्मात्रा इत्यर्थः ॥ ४४ ॥ (G)

१६५ । अमुमेवार्थं स्पष्टयति । प्रथमतो भवन्ति नव विप्रगणाः ओहलकर्णौ स्थापय । गाथाया अर्द्धमन्त्यपदं मालाच्छन्दो जानीहि ॥ ओहलो रगणः । (C)

---

१६५ । १ ओहलु (B & C) २ गाह (A) ३ देइ (A & F) देश (F) ४ करेहु (A) ५ ६७ (A), ६६ (F)

जहा,

वरिस जल भमइ घण गअण सिअल[1] पवण मणहरण
कणअ पिअरि णचइ[2] विजुरि[3] फुल्लिआ णीवा[4] ।
पत्थर[5] वित्थर[6] हिअला[7] पिअला[8] णिअलं[9] ण आवेइ[10] ॥
१६६[11] ॥ माला (A, B & C).

---

१६५। अथ दोहावृत्तेन स्पष्टीकृत्य पुनर्मालां लक्षयति पढमेति। पढम — प्रथमे चरणे एव विप्पगण — नव विप्रगणाश्चतुर्लघ्वात्मकगणाः होइ — भवंति, ततश्च जोहलु कण — योद्धृकर्णौ रगणगुरुद्वयात्मकगणौ ठवेहु — स्थापयत। ततः गाहा — गाथायाः अंत — अंत्यम् अद्धा — अर्द्धम् उत्तरार्द्धमित्यर्थः देइ — दत्त्वा, मालाच्छंदः कहेहु — कथयत ॥ अत्र देइ इत्येकारो ह्रस्वो ज्ञेयः। यत्र प्रथमचरणे नवचतुर्लघ्वात्मकगण-रगण-गुरुद्वयात्मकगणाः पतंति द्वितीयदलं च गाथोत्तरार्द्धस्वरूपं भवति, तन्मालानामकं वृत्तमिति फलितार्थः। (E).

१६५। पढेति॥ प्रथमं भवंति नवविप्रगणा जोहलकर्णं स्थापय। गाथार्द्धमंतिमे मालाच्छंदः कथ्यताम्॥ जोहलो रगणः, कर्णो द्विगुरुः॥ ६५॥ (G).

---

१६६। १ सलच (A, B & C). २ णचइ (A). ३ विजुरी (F). ४ णीआ (F). ५ पत्थर (A). ६ वित्थर (A). ७ हिअआ (B & C), हिअणा (E). ८ पिअणा (C & F). ९ णिअलं (B & C), णिअला (D & F). १० आवेइ (A & E). ११ ५८ (A), ६६ (F).

अथ चुलिआला छंद। (D)

चुलिआला जइ देइ[1] किमु[2]
दोहा उप्पर[3] मत्तह[4] पंचइ।
पअ पअ उप्पर संठवहु
सुद्ध कुसुमगण अंतह[5] दिज्जइ[6] ॥ १६७[7] ॥

१६६। उदाहरति। वर्षति जल भ्रमति घन गगने, शीतल पवनो मनोहरण, कनकपीता नृत्यति विद्युत्, फुल्लिता नीपा। प्रस्तरविस्तारहृदय प्रियो निकट नायाति ॥ प्रस्तरविस्तार इति काठिन्यद्योतनार्थम्। (C)

१६६। मालामुदाहरति बरिसेति। घण—घन मेघ गअण—गगने भमइ—भ्रमति, जल—जल वरिस—वर्षति, मण-हरण—मनोहर सिअल—शीतल पवण—पवन वात वातीति शेष. कणअ पिअरि—कनकपीता विजुरि—विद्युत् णच्चइ—नृत्यति, णीवा—नीपा कदम्बा फुल्लिआ—पुष्पिता। पत्थर वित्थर हिअआ—प्रस्तरविस्तीर्णहृदय पिअणा—प्रिय णिअल—निकटे ण आवेइ—नायाति ॥ (F)

१६६। यथा ॥ बरीति ॥ वर्षति जल भ्रमति घनो गगने, शीतल पवना मनोहर, कनकपीता नृत्यति विद्युत्, पुष्पिता नीपा। प्रस्तरविस्तृतहृदय प्रियो निकटे नायाति ॥ ६६ ॥ इति माला ॥ (G)

१६७। १ देहि (B & C) २ किम (A) किम (B & C) ३ उप्परि (A) ४ मत्तहि (E & F) ५ अन्तह (A) अन्तह (B) अन्तहि (C & F) ६ दिज्जइ (A) दिज्जइ (B) धरहि (C) ७ १८ (A) १० (E)

१६७। चूतिकाला यदि ददासि किमु दोहोपरि [मात्राः] पञ्च। पदे पदेऽन्ते संस्थापय अर्द्धं कुसुमगणमन्तेऽपि॥ संपूर्णदोहानन्तरं मात्रापञ्चकमिति। इयं हि द्विपदी, तत्र दोहापूर्व्वार्द्धानन्तरं मात्रापञ्चकदाने एकः पादः, एवं द्वितीयेऽपि पञ्चकलः। कीदृश इत्यत्राह कुसुमगण इति। लघ्वादिलघुद्वयान्तो गुरुरित्यर्थः। (C).

१६७। अथ चुलिआलानामकं वृत्तं लक्षयति, चुलिआलेति। दोहा उप्पर—दोहोपरि दोहायामिति यावत् मत्तहि पंचइ—मात्राः पंच यदि देह—दीयते, तदा चुलिआला कह [?]—चुलिआलां कथय। नच[नु] दोहायां किं प्रतिचरणे उत प्रतिदले वा क देयाः पंचमात्रा इत्यत आह, पअ पअ उप्परेति,—पदपदोपरि, अत्र पदशब्दो दलवाची उदाहरणानुरोधात्, तथाच एकैकदले इत्यर्थः, संठवऊ—संस्थापयत पंचमात्रा इत्यनुषंगः। ननु सर्वलघुरूपा उत गुरुलघुरूपा चेति कीदृश्य एकैकदलेऽते आदौ वा स्थाप्या इत्यत आह, सुद्धेति,—शुद्धः कुसुमगण आदौ एको लघुस्तत एको गुरुस्ततो लघुद्वयमेतादृशो गण इत्यर्थः। अंतह—अंते दिज्जइ—दीयते॥ एवं च दोहाया एकदलांते यदि पंचमात्राः कुसुमगणस्वरूपा दीयंते, तदा चुलिआलानामकं वृत्तं भवतीति फलितार्थः। (E).

१६७। अथ चूलिका॥ चुलीति॥ चुलिआला [?] यदि दीयते किं दोहाया उपरि मात्राः पंच। पदे पद्दे उपरि संस्थापय शुद्धं कुसुमगण[?]मंते दीयते॥ एकोनत्रिंशन्मात्राः पदे पदे कार्यास्तन्मध्ये

दोहा संखा[1] संठवहु उप्परि[2] पंचइ[3] मत्त ।
अट्ठदहुप्परि[4] बीसदुइ[5] चुलिआला उक्खित्त[6] ॥ १६८[7]
दोहा

---

अतिमा पञ्चमात्रा कुसुमगणरूपा इति ॥ कुसुम लघुगुरुद्विलघु रूप ऽ। बोध्यम् ॥ ६७ ॥ (G)

१६८। उक्ताय स्पष्टयति। दोहासंख्यां [संस्था]पय उपरि पञ्चकमात्रा। अष्टादशोपरि विंशतिद्वय चुलिआला उत्क्षिप्ता। दोहासंख्या दोहार्द्धमात्रासंख्या, तथाच दोहार्द्धे चतुर्विंशति मात्रास्तत्र मात्रापञ्चकदाने ऊनत्रिंशन्मात्रा भवन्ति, एतद्द्विगुणे अष्टपञ्चाशन्मात्रा भवन्ति। एतदेवोत्तरार्द्धेनाह। उत्क्षिप्ता उदिता। (C)

१६८। अथैनमेवार्थं दोहाद्वयेन पुनराह दोहालक्खणेति। आदौ दोहालक्खण — दोहालक्षणम् उप्परि — उपरि तदनन्तर मित्यर्थः पचइ मत्त — पञ्चैव मात्रा सठवडु — [सं]स्थापयत, एवं अट्ठदहुप्परि बीसदुइ — अष्टादशोपरि विंशतिद्वयेन मात्राणामिति शेष, अष्टपञ्चाशन्मात्राभिरित्यर्थः, चुलिआला उक्खित्त — उक्ता।

---

१६८। १ संखा (C) लक्खण (E) २ उप्पर (A B & C) ३ पचई (C) ४ अट्ठदहप्परि (A) अट्ठद उप्परि (C) अट्ठदुउप्परि (D) ५ बीसदइ (B) विसदुइ (C) ६ उक्खिडु (A) उक्खित्तु (B) ७ ९० (A) ९८ (F)

जहा, राआ लुद्ध[1] समाज खल[2]
　　वहु कलहारिणी[णि][3] सेवक धुत्तउ ।
　　जीवण[4] चाहसि सुक्ख जइ[5]
　　परिहर[6] घर जइ[7] वहुगुणजुत्तउ ॥ १६६[8] ॥
　　　　चुलिआला । (A, B & C).

---

क्वचिद्दोहासंखा संठवहु इति पाठस्तत्र आदौ दोहासंखा — दोहासंख्यां दोहामात्रासंख्याकमात्रामिति यावत् इति व्याख्येयम् । (E).

१६८ । दोहेति ॥ दोहासंख्यां स्थापयोपरि पंचमात्राः । अष्टादशोपरि विंशतिद्वयं चुलिआलायां व्याख्यातम् ॥ अष्टपंचाशन्मात्राः कार्या इत्यर्थः ॥ ६८ ॥ (G).

१६९ । उदाहरति । राजा लुब्धः, समाजः खलः, बधूः कलहकारिणी, सेवको धूर्त्तः । जीवने चाहसि [?] सुखं यदि, परिहर गृहं यदि वहुगुणयुक्तम् ॥ बधूः स्त्री, परिहर त्यज, बहुतरानर्थसम्भवादित्यर्थः । (C).

१६९ । चुलिआलामुदाहरति राआ लुद्धेति । राजा लुब्धः, समाजः खलः, बधूः कलहकारिणी, सेवको धूर्त्तः । अतः जइ — यदि बहुगुणजुत्तउ — बहुगुणयुक्तमपि बहुभिः कीर्त्तिप्रतिष्ठा-

---

१६९ । १ लुब्ध (F). २ ख dropt in (A). ३ करिणाणि (A, D & E). ४ जिवण (A). ५ जउ (A). दइ (B), चजइ (F). ६ परिहव (E & F). ७ घमु रद (D). ८ ६१ (A), ६९ (F).

अथ सोरट्ठा छंद । (D)

सो सोरट्ठउ[1] जाण[2] जं[3] दोहा विवरीअ[4] ठिअ[5] ।
पअ पअ जमक[6] वखाण णाअराअ पिंगल[7] कहिअ[8] ॥
१७०[9] ॥

---

प्रमुखैर्गुणै र्वर्जितमपीत्यर्थः औवन [विन] स्वयथ सुख थाइवि-वांछमि, मह—तदा घर—गृह परिहर—त्यजेत्यर्थः ॥ (E)

१६८ । यथा ॥ राजा इति ॥ राजा लुब्ध, समाज खल वधू कलहकारिणी, सेवि[के]को धूर्त्त । जीवन वाछसि सुख चेत् यदि, परिहर गृह, तर्हि बहुगुणयुक्त ॥ १८ ॥ (G)

१७० । अथ सौराष्ट्रम् । तत् सौराष्ट्र आनीहि यद्दोहाविपरीत स्थित । पदे पदे यमक नागराजपिंगलेन कथितम् ॥ प्रथम-तृतीयपादयोरेकादशमात्रात्, द्वितीयचतुर्थयोस्त्रयोदशमात्रात्-मिति दोहाविपरीत्य, पदे पदे इति प्रथमतृतीयपादयोरन्ते द्वितीयचतुर्थयोरन्ते च यमकमनुप्रास यावच्च कथय कुर्विति यावत् । (C)

१७० । अथ सौराष्ट्रनामक वृत्त लक्षयति सो सोरट्ठउ इति । ज—यत् दोहा विवरीअ ठिअ—दोहाविपरीतस्थिति दोहातो

---

१७० । १ सोरट्ठउ (A) २ जाणु (E) ३ जद (A) ४ विवरिअ (A) विपरिअ (B) विपरीआ (C) विररी (E) ५ Non est (C) दिअ (E) ठिअ (F) ६ जमअ (D) ७ पिंगलु (D) पिंग (F) ८ कहइ (D & F) कुणइ (F) ९ ११ (A) ७० (F)

जहा,

सो माणिअ पुणवंत[1] जासु भत्त पंडिअ तणअ।
जासु घरिणि[2] गुणवंति[3] सो[4] वि[5] पुहवि सग्गह[6] णिलअ॥
१७१[7]॥ सोरट्ठा। (A. B & C).

---

विपरीता स्थितिश्चरणानां स्थापनं यस्य तादृशमित्यर्थः, सो — तत् सोरट्ठउ — सौराष्ट्रं सौराष्ट्रनामकं वृत्तं जाणु — जानीहि, तत्र च पअ पअ — पादे पादे प्रतिचरणमित्यर्थः जमक वखाण — यमकं ख्यापय इति णाअराअ पिंगल — नागराजपिंगलः भणइ — भणति॥ अयं भावः — दोहायाः प्रथमतृतीयचरणयोस्त्रयोदशमात्राः द्वितीयचतुर्थयोश्चैकादशमात्रा देया इति दोहालक्षणेनोक्तं, तद्वैपरीत्येनात्र द्वितीयचतुर्थचरणयोस्त्रयोदशमात्राः प्रथमतृतीययोश्चैकादशमात्रा देया इति। (E)

१७०। सो इति॥ तत्सौराष्ट्रं जानीहि यद्विपरीतं दोहास्थिति। पदे पदे यमकं व्याख्याहि नागराजः पिंगलः कथयति॥ यमकमनुप्रासः॥ विपरीतेति॥ एकादश त्रयोदशेति भावः॥ ७०॥ (G).

१७१। उदाहरति। स मन्यते पुण्यवान् यस्य भक्तः पण्डितस्तनयः। यस्य गृहिणी गुणवती तस्य पृथिवी स्वर्गनिलयः॥ (C).

---

१७१। १ पुणवंत (A), पुणुमन्ति (B), पुणमंत (C & E). २ घरणि (E & F). ३ गुणमन्ति (B), गुणवन्त (C), गुणमति (D). गुणमंत (F). ४ से (E & F). ५ विध (F). ६ मग्ग (C & F). ७ ६९ (A), ७२ (F).

अथ हाकलि छंद । (D)

सगणा भगणा दिअगण ई[1] मत्त चउद्दह[2] पअ पलई[3] ।
संठइ[4] बंको बिरइ[5] तहा[6] हाकलि[7] रूअउ[8] एम[9] कहा ॥
१७२[10] ॥

---

१७१ । अथ सौराष्ट्रमुदाहरति सो माणिअ इति । स मान्यः पुण्यः गुणवत्—गुणवान् यस्य भक्त पण्डित[सु]नय, यस्य गृहिणी गुणवती, से वि—स्यापि पुहवि—पृथ्वी सग्गह णिलअ—स्वर्गनिलय स्वर्गवास इत्यर्थ ॥ (E)

१७१ । सो माणीति ॥ स मान्यः पुण्यवान् यस्य भक्त पण्डितस्तनयः । यस्य गृहिणी गुणवती तस्यैव पृथिव्या स्वर्गनिलय ॥ [स्वर्गे] निवास ॥ ७१ ॥ सौराष्ट्रम् ॥ (G)

१७२ । अथ हाकलीच्छन्दः । सगण भगण द्विजगणा मात्राश्चतुर्दश पदे पतन्ति । संस्थाप्य विरतौ वक्र तथा हाकलीरूपम् एतत् कथितम् ॥ अर्थात् पिङ्गलेन । अयमर्थ । सगण भगण द्विजगणा स्थाप्याः, नलेषां स्थाने नियमः, किन्तु पदानामन्त्यगुरुत्व नियत, सगणद्वयान्ते भगणद्वयान्ते द्विजगणास्ततो गुरुरेव क्रमेण एकादशाक्षराणि भवन्ति । यदि द्विजगण विहाय सगणभगणाभ्यां यथेच्छ गणद्वय कलायान्ते गुरुर्दीयते तदा

---

१७२ । १ भगण ण दिअगणइ (D)   २ चउदह (D)   ३ पलइ (B & D)
४ सठ (C)   ५ बिरहे बङ्क (B & C) बका चल (F)   ६ जहा (D).
७ हाकलिअ (B)   ८ रूअइ (A & F)   ९ एक्क (D)   १० ८४ (A) ७१ (F)

दशाक्षराणि भवन्ति, किन्त्वन्तिमगुरोः पूर्वं सगणो न देय इति सम्प्रदायः। (C).

१७२। अथ हाकलीनामकं वृत्तं लक्षयति सगणेति। जहा—यत्र सगणा—सगणो गुर्वंतश्चतुष्कल इत्यर्थः, भगणा—भगणो गुर्वादिश्चतुष्कल इत्यर्थः, दिअगण—द्विजगणश्चतुर्लघ्वात्मको गण इत्यर्थः, ई—एते गणा इत्यर्थः, अथच मत्त चउद्दह—मात्राश्चतुर्दश पअ पलई—पादे पतंति पादांते चेति शेषः, वंको—वक्रमेकं गुरुं संठइ—संस्थाप्य, विरइ—विरतिर्भवति, अंतिमगुरोः प्रागेव विरतिरित्यर्थः। एऊ—एतत् हाकलिरूअह—हाकलीरूपं हाकलिनामकवृत्तस्य स्वरूपमित्यर्थः कहा—कथितम्। अत्र सगण-भगण-द्विजगणातिरिक्तो गणो [न] भवतीति, एते एव च स[म]स्ता व्यस्ता वा पतंतीति नियमस्तथाच यदि सगणत्रयानंतरं भगणत्रयानंतरं द्विजगणत्रयानंतरं वा एको गुरुः स्थाप्यते प्रतिचरणं, तथापि हाकलीवृत्तं भवति। अथ एकस्मिंश्चरणे सगणत्रयानंतरमेकं गुरुं [सं]स्थाप्य तदितरचरणेषु भगणत्रयानंतरं द्विजगणत्रयानंतरं परस्परसंसृष्टैतद्द्वयानंतरं वा गुरुः स्थाप्यते, तदाप्येतद्वृत्तं भवति। अथ एकस्मिंश्चरणे भगणत्रयानंतरं द्विजगणत्रयानंतरं वा एकं गुरुं संस्थाप्य तदितरेषु परस्परसंसृष्टैतत्त्रयानंतरं गुरुः स्थाप्यते तथाप्येतद्वृत्तं भवतीति न विभावनीयम्। (*E*).

१७२। सगणो भगणो द्विजगणो मात्राश्चतुर्दश पदे पतंति। संस्थापय वक्रमंते तथा हाकलिरूपमेवं कथय॥ वक्रो गुरुः॥ ७२॥ (*G*).

मत्त चउद्दह पढम दल[1] एआरह[2] वणेहि[3] ।
दह अक्खर उत्तर दलहि[4] हाकलि[5] छंद[6] कहेहि ॥*
१७३[7] ॥ दोहा ।

---

१७३ । मात्राश्चतुर्दश पदे पदे पतन्ति, एकादशवर्णैः । दशाक्षराण्युत्तरदले हाकलिच्छन्द कथय ॥ (C)

१७३ । अथ नियमांतरमङ्गीकृत्य पुनर्हाकलीवृत्तं लक्षयति, मत्त चउद्देति । पढम दल — प्रथमदले पूर्वार्द्धे इति यावत् प्रतिचरणमिति शेषः, कचित्तु पअइ पअ इति पाठस्तत्र पादे पादे अर्धात्पूर्वार्द्धस्य, उत्तरदले इत्यपि उक्तत्वादिति बोध्यम्, एआरह वणेहि — एकादशवर्णैः कृत्वा मत्त चउद्दह — मात्राश्चतुर्दश, उत्तर दलहि — उत्तरदले उत्तरार्द्धे इत्यर्थः प्रतिचरणम् इत्यनुषङ्गः, दह अक्खर — दशाक्षरैश्चतुर्दशमात्राः इत्यनुषङ्गः यत्र पतन्तीति शेषः, तत् हाकलि छंद कहेहि — हाकलीनामकं छन्दः कथय ॥ अत्र च प्रथमद्वितीयचरणयोर्द्विजगणैर्देय एव, अन्यथा एकादशाक्षरोत्पत्त्यभवापत्तिः । तृतीयचतुर्थयोश्च द्विजगणेनैव देयः अन्यथा दशाक्षरोत्पत्त्यभवापत्तिः, इति नियमे तात्पर्यमुन्नीयते । तथाहि क्रमेण विपर्ययेण वा सगण-भगणौ अथवा सगणद्वयमेव

---

१७३ । १ पढम पअ (C) पअ पअहि (F)   २ एआरह (C) एआरह (D), एआरह (E)   ३ बणति (E)   ४ दलह (B & C)   ५ हालि (C), काकलि (F)   ६ च्छन्द (B & C), छन्दु (E)   * This śloka is not found in (A)   ७ ८२ (F)

जहा,

उच्चउ छाअण[1] विमल घरा[2] तरुणी घरिणी[3] विणअपरा[4]।
वित्तक पूरल[5] मुद्दहरा[6] वरिसा[7] समआ सुक्खकरा ॥
१७४[8] ॥ हाकलि। (A, B, C & F.)

---

भगणद्वयेनैव वा [मं]स्थाप्य यदि द्विजगणो दीयते अंते च गुरुर्दीयते, तदैवाक्षरषट्कं भगणभगणयोरक्षरचतुष्टयं च द्विजग[ण]स्य एकमक्षरं च गुरोरेवमेकादशाक्षराणि पूर्वार्द्धे प्रतिचरणं पतंति, उत्तरार्द्धेऽपि चेदेवं द्विजगणः स्थाप्यते तत्राप्येकादशाक्षराणि स्युः, तस्मादुत्तरार्द्धे सगणत्रयोत्तरं भगणत्रयानंतरं वा परस्परसंसृष्टैतत्त्रयानंतरं वा गुरुः प्रतिचरणं स्थाप्यते तदैवोत्तरार्द्धे दशाक्षराणि पतंति, एवं च प्रथमद्वितीयचरणयोर्द्विजगणदानमंगीकृतपूर्वं लक्षणकृता,**तदनंगीकारेण चैतल्लक्षणमित्यस्मत्तातचरणोपदिष्टः पंथाः सुधीभिर्विभाव्यः। (E).

१७३। मत्तेति ॥ मात्राश्चतुर्दश पदे पदे एकादशवर्णाः। दशाक्षराण्युत्तरदले हाकलिच्छंदः कथय ॥ ७३ ॥ (G).

१७४। उदाहरति। उच्चोटानकं विमलं गृहं, तरुणी गृहिणी विनयपरा। वित्तेन पूर्णं मुद्रागृहं, वर्षासमयः सुखकरः ॥ उठानशब्दोऽङ्गनवाची, मुद्रागृहं कोषागारम्। अत्र च यदि तदेत्यध्याहार्य्यम्। (C).

---

१७४। १ उच्चउ छावण (A), उच्च उट्टाघण (C), उच्चउ च्छावधि (D & F). २ घरा (A). ३ घरणौ (A), घरणी (F). ४ विणअकरा (B & C). ५ पूरल (B & C). ६ मुदंहरा (D), मूलघरा (F). ७ वरिषा (A), वरीसा (D). ८ ६५ (A), ७३ (F).

## अथ मधुभारच्छंदः । (D)

जसु पलइ[1] सेक्ख[2] पअहरह[3] एक्क[4] ।
चउमत्त[5] वेवि[6] महुभार[7] एवि[8] ॥ १७५[9] ॥

---

१७४ । अथोत्तरलक्षणाभिप्रायेण हाकलीमुदाहरति उच्चेति । यस्य उत्तमाच्छादित विमल गृह, तरुणी विनयपरा गृहिणी कान्ता, वित्तपूर्णं मुद्रागृह केे[को]षभाण्डमित्यर्थं, तस्य वर्षासमय सुखकर ॥ (E)

१७४ । यथा ॥ उच्चेति ॥ उत्तमाच्छादन विमलगृह, तरुणी गृहिणी विनयपरा । वित्तपूर्णं कोषगृह, वर्षासमय सौख्यकर ॥ तस्येति शेष ॥ ७४ ॥ हाकलीति ॥ (G)

१७५ । अथ मधुभारच्छन्द ॥ यस्य पतति शेषे पयोधर[एक]। चतुर्मात्रिकौ द्वौ मधुभार एव ॥ एकचातुर्मात्रिकानन्तर पयोधरो जगण मिलित्वा द्वौ चातुर्मात्रिकौ । (C)

१७५ । अथ मधुभारनामक वृत्त लक्षयति जसु पलइति । जसु — यस्य चरणे इति शेष चउमत्त वेवि — चतुर्मात्रिकौ द्वौ पतत, सेख — शेषे पादान्ते इत्यर्थ एक्क — एक चतुर्मात्रिक- इत्यर्थं [पल]इ — पतति, कर्त्तव्ययोर्द्वयोश्चतुर्मात्रिकयोश्चान्तिम-

---

१७५ । १ पलई (F) २ सेष (A & E), सेष (F) ३ पअहरच (B & C) पअरहच (E) पओहर (F) ४ एक (F) ५ चामत्त (D) चौमत्त (F) ६ वेवि (A) वेअ (D) तीन (F) ७ महुहार (B & C) मधुभार (E) ८ चावि (D) कवि (F) ९ ११ (A), ७५ (F)

जहा, जसु चंद[1] सीस पिंधणह[2] दीस ।
सो संभु एउ[3] तुह[4] सुभ[5] देउ ॥ १७६[6] ॥
मधुभार[7] । (A & F).

अथाभीरच्छंदः । (D).

गारह[1] मत्त करीज अंत पत्रोहर दीज ।
एहु[2] सुछंद[3] अहीर[4] जंपइ[5] पिंगल धीर[6] ॥ १७७[7] ॥

---

स्वतुर्मात्रिको जगणस्वरूप एव पततीत्यर्थः, एवि — एतत्, मधुभारनामकमेतद्वृत्तमित्यर्थः । (E).

१७५ । जसु इति ॥ यस्य पतति शेषे पयोधर एकः । चतुर्मात्रास्त्रयो मधुभारमेतत् ॥ शेषे अर्द्धांते ॥ ७५ ॥ (G).

१७६ । उदाहरति । यस्य चन्द्रः शीर्षे परिधानं दिशः । स शम्भुर्देवः तुभ्यं सुखं ददातु ॥ (C).

१७६ । मधुभारमुदाहरति । जस्विति । यस्य शीर्षे चंद्रः पिंधनं दिक् । स देवः शम्भुः मह्यं सुखं ददातु ॥ (E).

१७६ । यथा जसु इति ॥ यस्य चंद्रः शीर्षे वस्त्रं दिशः । स शंभुरयं युष्माकं शुभं ददातु ॥ ७६ ॥ इति मधुभारम् ॥ (G).

---

१७६ । १ चंदु (A). २ पीन्धन (B), पिन्धण (C), पिंधण (F). ३ देउ (B & C). ४ तुम्ह (A), तुम्ह (D), मज्झ (E). ५ सुक्खु (A & E), सुभ (B & C), सुभ (F). ६ ६० (A), ०६ (F). ७ मधुहार (B), मङ्हार (C).

१७७ । १ एगारह (B), इग्गारह (C). २ एह (F). ३ सुच्छन्द (C), सुछंदु (E). ४ अहीर (B & C), अहिर (E). ५ जम्पइ (B), जम्पइ (C). ६ धीर (A & D), धीर (B), वीर (C). ७ ६८ (A), ७७ (F).

जहा, सुंदरि गुज्जरि[1] णारि[2] लोअण दीह बिसारि[3]।
पीण पओहर भार लोलइ[4] मोत्तिअ[5]हार॥
१७८[6]॥ अहीर। (A)

१७१। अथाधीरच्छन्द॥ एकादशमात्रा क्रियन्ते अन्ते पयोधरो दीयते। एतच्छन्द अधीर जल्पति पिंगलधीर॥ पयोधरो जगण स चैकादशमात्रान्तःपाती, प्राथमिकमात्राष्टकन्तु यथेच्छ, न तु सूत्रोदाहरणाद्भवति। आभीरनामक छंद इति केचित्। (C)

१७२। अथाभीरनामक वृत्त लक्षयति गारहेति। यत्र गारह मत्त—एकादशमात्रा क्रियंते, पयोधर दीयते, कर्त्तव्यैकादशमात्रासु अंतिममात्राचतुष्टय जगणस्वरूपमेव स्थाप्यते इत्यर्थ, [एड]—एतत् आभीर सुछद—आभीर सुच्छद इति पिंगलधीर जल्पति॥ (E)

१७३। गारेति। एकादशमात्रा क्रियंते अंते पयोधरो दीयते। एतत् सुच्छद अभीर जल्पति पिगलो धीर॥ एकादशमात्रामध्ये अंते मात्राचतुष्टय जगणरूप कार्यमित्यर्थ॥७३॥ (G)

१७८। उदाहरति। सुन्दरी गुर्ज्जरी नारी, लोचन दीर्घविसारि। पीनपयोधरभारे लोलते मौक्तिकहार॥ (C)

१७८। आभीरमुदाहरति। यस्या पीनपयोधरभारे मौक्तिक

१७८। १ गुज्जर (F) २ Dropt in (F) ३ विसारि (B) ४ लुलइ (A) लोलइ (E) लोलिअ (F) ५ मोतिअ (B & C) मोत्तिअ (D) ६ १९८ (A) ७८ (F)

अथ दण्डकलच्छंदः । (D).

कुंत[1]अरु[2] धणुद्धर[3] हअवर[4] गअवर

छक्कलु[5] विवि[6] पाइक दले

बत्तीसह[7] मत्तह[8] पअ[9] सुपसिद्धउ[10]

जाणह[11] बुहअण हिअअतले[12] ।

सउवीस अठग्गल[13] कल संपुणउ

रूअउ[14] फणि[15] भासिअ भुअणे

दंडअल णिरुत्तउ गुरु संजुत्तउ[16]

पिंगलिअं[17] जंपंत[18] मणे ॥ १७९[19] ॥

---

हारः लोटइ—लुठति, दीर्घविशाललोचना सा सुंदरी गुर्ज[री] नारी ॥ (E).

१७८ । सुंदेति ॥ सुंदरी गुर्जरी नारी लोचने दीर्घे विशाले । पीनः पयोधरभारो लोलते मौक्तिकहारः ॥ ७८ ॥

इत्यर्थो[भी]रम् ॥ (G).

---

१७९ । १ ता कुंत (A), कणु (B). २ Dropt in (A), दरु (B & C), दरु (E). ३ धणुदर (A & C). ४ हयवरु (A). ५ छमउ (A, B, C & D). ६ वेवि (B & C). ७ बत्तीस (A, B, E & F). ८ मत्त (A & B), मत्तउ (F). ९ पद्म पद्म (A & B). १० सुपसिद्धइ (D). ११ जाणउ (B & C). १२ हिअअयरए (A & C), हिअअछदरे (B), हिअयअयले (F). १३ पढ़म्मल (A, B & C), विहट्टमाल (D), चट्टमाल (F). १४ रूअय (A & E), चरउ (D), वुमउ (F). १५ भणि (B). १६ संजुत्तम (F). १७ पिंगलुआ (A), पिंगलचं (D), पिंगलोचा (E), पिंगल (F). १८ जम्पत (B), पढ़ुम (F). १९ ७० (A), ७९ (F).

जहा, सुंदरि गुज्जरि[1] णारि[2] लोअण दीह विसारि[3] ।
पीण पओहर भार लोलइ[4] मोत्तिअ[5]हार ॥
१०८[6] ॥ अहीर । (A)

१०१ । अथाधीरच्छन्दः ॥ एकादशमात्रा क्रियन्ते अन्ते पयोधरो दीयते । एतच्छन्दः अधीर जल्पति पिंगलधीरः ॥ पयोधरो जगणः, स चैकादशमात्रान्तःपाती, प्राथमिकमात्रासप्तकन्तु यथेच्छ, न तु सूत्रोदाहरणाद्भवति । आभीरनामक इद इति केचित् । (C)

१०१ । अथाभीरनामकं वृत्तं लक्षयति गारहेति । यत्र गारह मत्त—एकादशमात्राः क्रियंते, पयोधरः दीयते, कर्त्तव्यस्वेकादशमात्रासु अंतिममात्राचतुष्टयं जगणस्वरूपमेव स्थाप्यते इत्यर्थः, [एअ]—एतत् आभीर सुछदु—आभीरः सुच्छदः इति पिंगलधीरः जल्पति ॥ (E)

१०१ । गारेति । एकादशमात्राः क्रियंते अंते पयोधरो दीयते । एतत् सुच्छंदः अभीर जल्पति पिंगलो धीरः ॥ एकादशमात्रामध्ये अंते मात्राचतुष्टयं जगणरूपं कार्यमित्यर्थः ॥१०१॥ (G)

१०८ । उदाहरति । सुन्दरी गुर्जरी नारी, लोचन दीर्घविशारि । पीनपयोधरभारे लोलते मौक्तिकहारः ॥ (C)

१०८ । आभीरमुदाहरति । यस्याः पीनपयोधरभारे मौक्तिक

१०८ । १ गुज्जर (F) २ Dropt in (F) ३ विचारि (B) ४ लुलइ (A) खुडइ (E) लालिअ (F) ५ मोत्तिम (B & C) मोत्तिअ (D) ६ ९८ (A) ७८ (F)

अथ दण्डकलच्छंदः। (D).

कुंत[1]अरु[2] धणुद्धरु[3] हअवर[4] गअवरु
छक्कलु[5] विवि[6] पाइक दले
बत्तीसह[7] मत्तह[8] पअ[9] सुपसिद्धउ[10]
जाणह[11] बुहअण हिअअतले[12]।
सउवीस अठग्गल[13] कल संपुणउ
रूअउ[14] फणि[15] भासिअ भुअणे
दंडअल णिरुत्तउ गुरु संजुत्तउ[16]
पिंगलिअं[17] जंपंत[18] मणे॥ १७९[19]॥

हारः लोटइ—लुठति, दीर्घविशाललोचना सा सुंदरी गुर्ज[री]·नारी॥ (E).

१७८। सुंदेति॥ सुंदरी गुर्जरी नारी लोचने दीर्घे विशाले। पीनः पयोधरभारो लोलते मौक्तिकहारः॥ ७८॥

इत्यधी[भी]रम्॥ (G).

१७९। १ ना कुंत (A), कणु (B). २ Dropt in (A), हव (B & C), उरु (E). ३ धणुद्धर (A & C). ४ हयअव (A). ५ छप्पउ (A, B, C & D). ६ वेवि (B & C). ७ बत्तीस (A, B, E & F). ८ मत्त (A & B), मत्तउ (F). ९ पअ पअ (A & B). १० सुपसिद्धइ (D). ११ जाणउ (B & C). १२ हिअअरए (A & C), हिअअअहरे (B), हिअअअअत्ते (F). १३ पअग्गल (A, B & C), विहट्टग्गल (D), अट्टग्गल (F). १४ रूअव (A & E), अअउ (D), वुत्तउ (F). १५ भणि (B). १६ संजुत्तअ (F). १७ पिंगलथा (A), पिंगलचं (D), पिंगलीचा (E), पिंगल (F). १८ जप्पत (B), पइअ (F). १९ ७० (A), ०९ (F).

१०८। अथ दण्डकलच्छन्द । कुन्तधरो धनुर्द्धरो हयवर गजवर षट्पदोऽपि द्वौ दले, द्वात्रिंशन्मात्रिक पद सुप्रसिद्ध जानीहि बुधजनहृदयहर । शतविंशतिकपदाधिककलासम्पूर्ण रूपक फणिभाषित भुवने दण्डकल निरुक्त गुरुमयुक्त पैङ्गलिका जपत मनसा ॥ कुन्तधराद्यश्चत्वारश्चतुष्कलवाचका, तेनादौ चतुष्कलगणा, षट्पद षट्कलगण, दले चरणे, पदम् अष्टकल द्वात्रिंशन्मात्रोऽत्र पादस्य चतुर्थांश पद तेनाष्टौ मात्रा लभ्यन्ते, तेनाष्टाविंशत्यधिकशतकलासम्पूर्णमित्यर्थ । अन्ते गुरुमयुक्त पैङ्गलिका पिङ्गलाध्ययनवन्त । (C)

१०८। अथ दण्डकल लक्षयति कुन्तद्धर इति। कुन्तधर धनुर्द्धर हयवर गजवर एतच्चतुष्कलचतुष्टय, तत छक्कलु—षट्कल, ततश्च गुरुसजुत्तउ—गुरुसयुक्तम् अन्तस्थितैकगुरुकमित्यर्थ, बिबि पाइक्क—पदातिद्वय चतुष्कलद्वयमित्यर्थ, एव दले—पूर्वार्द्धे उत्तरार्द्धे चेत्यर्थ, बत्तीस मत्त—द्वात्रिंशन्मात्रा पअ—पादे पतति प्रत्येकमिति शेष, सपुण[उ]—चरणचतुष्टयस्या इत्यर्थ, बीस अठग्गल[ल]—अष्टाविंशत्यधिका सउकल—शत कला भवति, तत् सुपसिद्धउ—सुप्रसिद्ध फणि भाषिअ रूअउ—फणिभाषितरूप, भुअणे—भुवने दण्डकल णिरुत्तउ—दण्डकल निरुक्त इति पैंगलिका मनसि जल्पति हे बुधजना एव हिअअतले—हृदय तले जाणहु[ह]—जानीत॥ यत्र प्रथम चतुष्कलचतुष्टय तत एक षट्कल ततश्च पुनश्चतुष्कलद्वय तत एको गुरु प्रतिचरण पतति, तद्दण्डकलनामक वृत्तमिति फलितार्थ । (F)

तहा, राअह[1] भग्गंता[2] दिग[3] लग्गंता[4]

परिहरि हअ गअ[5] घर[6] घरिणी

लोरहि[7] भरु सरवरु[8] पअ परु[9] परिकरु[10]

लोट्टइ पिट्टइ[11] तणु[12] धरणी ।

पुणु[13] उट्ठइ[14] संभलि कर[15] दंतंगुलि[16]

बाल[17] तणअ कर जमलकरे[18]

कासीसर[19] राआ णेहलु[20] काआ

करु[21] माआ[22] पुणु[23] थप्पि[24] धरे ॥

१८०[25] ॥ दंडकल[26] । (A & F).

---

१७९ । अथ दंडकलं ॥ कुंतेति ॥ कुंतकरो धनुर्द्धरो हयवरो गजवरः षट्कलो द्वौ पदातौ दले, द्वात्रिंशन्मात्राः पादे सुप्रसिद्धा जानीत बुधजना हृदयतले । शतं विंशतिरष्टाधिका कलाः १२८ संपूर्णे वृत्ते फणिभाषिते भुवने, दंडकलं निरुक्तं

---

१८० । १ राग (C). २ भग्गेजा (E). ३ दिग्ग (D & F). ४ लगन्ता (C). ५ ठाव्व (D). ६ Dropt in (B). ७ रोलइ (A), लोरहि (B), लोरभि (F). ८ सक्कलु (A), सरवर (B). ९ रअ पर (A), dropt in (B), रिउजण (C), रुअदूथ (D), पण पूर (F). १० Dropt in (B), रुअवर (D). ११ Dropt in (C). १२ तग्गो (E). १३ पुणि (E), पुण (F). १४ उट्ठइ (B & C), रुट्ठइ (E). १५ करि (A). १६ दंतंगुलि (D). १७ वाज (E). १८ जमलकरे (A). १९ कसीसर (A), कासीसर (E). २० लेहणु (C). २१ करि (E), कर (F). २२ मादा (B). २३ पुण (E & F). २४ थप्प (D). २५ ७१ (A), ८० (F). २६ दंडअल (B & C).

गुरुद्वययुक्त पिंगलो जल्पति आत्ममनसि॥ कुतेति चत्वारश्चत् ष्कला, पदातिश्चतुष्कलः ॥ ७८ ॥ (G)

१८०। उदाहरति। राजानो भग्ना दिशु लग्ना परिहृत्य हय गजगृहदारिणी, नैवैर्भृत सरोवर रिपुजनपरिकर पीडयति लोटयति तनु धरण्या। पुनरुत्थाय सभायां करोति दन्ताङ्गुली बालतनया कर यमल कुर्व्वन्ति, काशीश्वरो राजा स्नेहलकाय कृत्वा मार्या पुन स्थापयति। नैवैरश्रुभि, परिकरो भार्य्या, सभायां धैर्य्यं कृत्वा, दन्ताङ्गुलिकरणमत्यद्भुते, यमल जोडि। एतादृशी दशां दृष्ट्वा शत्रुपरिजनेष्वपि स्नेहयुक्तशरीरो भूत्वा पुन स्वस्थाने स्थापयित्वा धा[र]यति पालयति। (C)

१८०। दण्डकलमुदाहरति राअह इति। हअ गअ घर घरिणी — हयगज[गृह]गृहिणी परिहरि — परित्यज्य भग्गता — पलायमाना कथम राअह — राजान दिअ लग्गता — दिशु लग्ना दिगन्त गता इत्यर्थः, तेषा चेति शेष लोरहि — अश्रुभि भरु सरवरु — भृता सरोवरा, कश्चिच पअ पड परिकरु — पाद-पतितनिगड़ धरणी — धरण्या लोट्टइ — विचेष्टते, तनु शरीर च पिट्टइ — ताडयति, कर दतंगुलि — कृतदंतांगुलि मन् पुण उट्टइ सभलि — पुनरुत्तिष्ठते सावधानीभूय, बाल तणअ कर जमलकरे — बालतनयकरेण नमस्कार कारयति। इद च जातिवर्णनं। तथा-वस्थ च दृष्ट्वा त णेहल काआ — स्नेहलकाय कासीसर राआ — काशीश्वरराज माआ — मायां दया करि — कृत्वा पुन थप्पि धरे — स्थाप्य धृतवान् स्वराज्ये रचितवानित्यर्थः ॥ (F)

अथ दीपकच्छंदः। (D).

सिर देह[1] चउ[2] मत्त लहु एक कर[3] अंत।
कुंतेक्क[4] तसु[5] मज्झ[6] दीपक्क सो[7] बुज्झ॥ १८१[8]॥

१८०। यथा॥ राज्ञा इति॥ राजानो भग्ना दिक्षु लग्नाः परिहृत्य हयगज[गृह]गृहिणीः। अश्रुभिर्धृत्वा सरोवरान् पदपतितः परिकरो लुटति ताडयति तनुं धरण्यां। पुनरुत्तिष्ठत्यवधार्य्य कृतदंतांगुलिर्वालतनयैः कृत्वा नमस्कारं कारयति, काशीश्वरो राजा स्नेहालुकायः कृत्वा मायां पुनः [सं]स्थाप्य धृतवान्॥ परिकरः स्त्रीजनः॥ ८०॥ इति दंडकलम्॥ (G).

१८१। अथ दीपकच्छन्दः॥ शिरसि देहि चतुर्मात्रं लघुमेकमन्ते। कुन्त एको यस्य मध्ये दीपकं तद्बुध्यस्व॥ शिरसि आदौ, कुन्तः पञ्चकलो गणः। (C).

१८१। अथ दीपकनामकं वृत्तं लक्षयति सिर देहेति। सिर—शिरसि आदावित्यर्थः चउ मत्त—चतुर्मात्रिकं गणं देह—स्थापय, अंत—अंते पादांते लहु एक—लघुमेकं करु—कुरु, तसु—तयोः चतुर्मात्रिकैकलघुकगणयोरित्यर्थः मज्झ—मध्ये कुंतेक्क—कुंतमेकं पंचकलमेकमित्यर्थः कुरु इति पश्चात्तनेनान्वयः, दीपक्क सोउ बुज्झ—दीपकनामकं [तत्] वृत्तं जानीहीत्यर्थः॥ यत्र

१८१। १ देक्ख (B), देउ (C). २ चौ (D). ३ तसु (D), कसु (E). ४ कुंतक्क (A), दंतेक्क (B & C). ५ जसु (C). ६ चंत (A). ७ सउ (B & F), सइ (C), सोइ (D & E). ८ ७१ (A), ८२ (F).

जहा, जसु हत्थ' करवाल' बीपक्ख' कुल काल।
सिर सोह' वर छत्त संपुण्ण ससि मत्त' ॥ १८२'॥
दीपक। (A B, C & F)

प्रथम चतुष्कलगणात पञ्चकलगणात एको लघु: प्रतिचरण पतति, तद्दीपकनामक वृत्तमिति फलितार्थ। क्वचित् कुतन्ति लघु मज्झेति पाठस्तत्र चैते इमाते एक लघु कुरु, कुतन्ति—कुरुतयः, लघु—तयोश्चतुमात्रिकैकैकलघुकगणयो मज्झ—मध्ये कुरु इत्यर्थ। इद च एकैकदलाभिप्रायेण, अन्यथैकैकपादे चतुष्कलत्रयकाभावादसम्भवापत्तिरिति द्रष्टव्य। प्रथम यत्र चतमात्रिकगणात पञ्चकलत्रय ततो लघु प्रतिदल पतति, तदा [दी]पक वाक्र इति द्वितीयपाठे *निर्गलितार्थ* ॥ (F)

१८१। सिर इति ॥ शिरसि देहि चतुर्मात्रा लघुमेक कुर्वते। कुतमेक तस्य मध्ये दीपक बुध्यस्व ॥ शिरस्यादौ, कुन पञ्चकला ॥ ८१ ॥ (G)

१८२। उदाहरति। यस्य हस्ते करवाल प्रति[वि]पक्षकुलकाल। शिरसि शोभते वरच्छत्र सम्पूर्णशशिवत् ॥ (C)

१८२। अथ दीपकमुदाहरति जसु हत्थ इति। विपक्ख कुलकाल—विपक्षकुलकाल करवाल खड्ग जसु हत्थ—यस्य हस्ते,

१८२। १ हत्थ (A) २ करवालु (F) ३ विपक्ख (A) विपक्खु (D) विपक्ख (E) विपक्ख (F) ४ सेव (A & B) सोव (C) ५ मित्त (B) वत्त (D & F) ६ ९१ (A) ८१ (F)

अथ सिंहावलोकच्छंदः। (D).

गण विप्प[1] सगण धरि पअह पअं[2]
भण[3] सिंहअ[4]लोअण[5] छंद[6]वरं[7]।
गुणि गण[8] मण वुज्झहु[9] णाअ[10] भणा[11]
णहि[12] जगणु[13] ण भगणु ण कण[14]गणा[15] ॥ १८३[16]।

---

सोह—शोभते, यस्य सिर—[शिर]सि वर छत्त—वरच्छत्रं, संपुण ससि मत्त—संपूर्णशशिवत्, अथवा संपूर्णशशिमात्रं पौर्णिमचंद्र-मंडलप्रमाणमित्यर्थः शोभते इति पूर्व्वेणैवान्वयः॥ (E).

१८२। यथा जसु इति॥ यस्य हस्ते करवालो विपक्षकुलकालः। शिरसि वरं छत्रं पूर्णशशिवत्॥ ८२॥ इति दीपकम्॥ (G).

१८३। अथ सिंहावलोकः॥ विप्रगणं सगणं धृत्वा पदे पदे भण सिंहावलोकं छन्दोवरं। गुणिगणा मनसा बुध्यद्धं नागो भणति, यस्मिन्[न्न] य[ज]गण-भगणौ न कर्णगणः॥ पदे पदे प्र[ति]पादं, विप्रगणं चतुष्कलं, सगणमन्तेगुरु चतुष्कलं, धृत्वा स्थापयित्वा, नागः पिङ्गलः। तथाच विप्रगणसगणाभ्यामेव छन्दो-

---

१८३। १ विप्प गण (F). २ सगकथं (D). ३ भणु (B, C & F). ४ सिंदव (A & D). ५ लोय (B), non est (C), लोवय (D), लोवद (F). ६ छन्द (C), सुबंदु (D). ७ धुअं (D), वुरम् (E). ८ जण (B), घण (C & E). ९ Dropt in (B), वुवभउ (C). १० करथ (A). ११ घण (A), मणा (D), मूण (F). १२ Dropt in (A & B), णथ (C), यह (D), जतु ण (E). १३ जगण (B). १४ कण (E). १५ घणा (C). १६ ७४ (A), ८६ (F).

निर्व्वाह कार्य्य । एतदेव स्पष्टयितुमाह यस्मिन्निति, एतच्छन्दसि जगणभगणकर्णगणा न पतन्ति । जगणो मध्यगुरु, भगण आदि गुरु, कर्णो द्विगुरु, एतेषां निषेधाच्चतुष्कलेषु सगणविप्रगणाव [व]शिष्येते । (C)

१८३ । अथ सिंहावलोकनामकं वृत्तं लक्षयति गण विप्पेति पअइ पअ—पादे पादे गण विप्प सगण—विप्रगणसगणौ धरि—धृत्वा, छदवर—छन्दःश्रेष्ठं सिंहअ लोअह—सिंहावलोकं भण, तसु—तस्मिन् न जगण न भगण न कर्णगण । जगणो मध्यगुरुर्गण, भगणो गुर्वादिर्गण, कर्णो गुरुद्वयात्मको गण, एते तत्र न पततीत्यर्थ, इति णाअ भणइ—नाग भणति । हे गुणि अण—गुणिजना यूयमिति [प्रिय] मण बुज्झहु—मनसि बुध्यध्वम् ॥ अत्र विप्रसगणयो क्रमिकयो समुदितयोर्वा स्थापने न नियम, किंतु एताभ्यामेव व्यस्तसमस्ताभ्या पादे षोडशकला पूरणीया, एताभ्यामतिरिक्तश्च गणो न देय । अतएवोदाहरणे प्रथमपादे ज[स]गणचतुष्टयेनैव षोडशमात्रा पूरिता, द्वितीयचरणे च प्रथमविप्रद्वयमनतर सगणद्वयमित्युभाभ्यामेव षोडशकला पूरिता, तृतीये च पुन सगणचतुष्टयेनैव पूरिता, * * * न त्वन्यो गणो दत्त, न तेतावेव क्रमिकसमुदिताविति द्रष्टव्यम् । (E)

१८३ । विप्पेति ॥ विप्रगण सगण धृत्वा पदे पदे, भण सिंहावलोकित[कन] छन्दोवर । गुणिगणा मनसि जानीत, नागभणित, नास्ति जगणो न भगणो न कर्णगण ॥ विप्राद्यस्तस्रो मात्रासगणोऽपि ताभ्यां षोडशमात्रा प्रतिपाद कार्या इति तात्पर्यम् ॥ ८३ ॥ (G)

पअ पअ[1] आइहि गुरुआ[2]
पिंगल पभणेइ[3] संअल[4] णिभंती[5] ।
छंद पवंगम[6] दिट्ठो[7]
मत्ताणं एक[8] वीसंती[9] ॥ १८७[10] ॥ गाहा ।

---

१८६ । अथ प्लवगमनामक वृत्त लक्षयति जत्थेति । जत्थ—यत्र पढम—प्रथम पादादावित्यर्थः छक्क मत्त—षण्मात्रिक पअप्पअ—पादे पा[दे] दिज्जइ—दीयते, ततश्च चउमत्त गणा—चतुर्मात्रिका गणा दिज्जइ—दीयते इति पूर्वेणैवान्वयः, पंचमत्त—पंचमात्रिकगण णहि किज्जइ—न क्रियते । षट् कलानन्तर चतुर्मात्रिकगणेनैव पादपूरण कर्त्तव्य न तु पंचमात्रिक गणेनेत्यर्थः । अंते—पादांत इत्यर्थः सभज्जि—सस्तत्य एक्कक—एकैक लहु गुरु—लघुर्गुरुः चाहइ—अपेक्ष्यते पादांते लघुगुरु अव्ययक्रमेण स्थापनीयावित्यर्थः, हे मुद्धि—मुग्धे, तत् प्लवगम-च्छन्दो विलक्षण शोभते ॥ अत्र षट्कलोत्तर यथासंभव पतिते चतुर्मात्रिके न तु पंचमात्रिके पादांते अवश्यापेक्षणीयाभ्यां च लघुगुरुभ्यां प्रतिचरणमेकविंशति कला पूरणीया इति सम्प्रदायः ।

---

१८७ । १ Dropt in (E) २ गुरुआ (C) ३ पभणइ (B) भणेइ (D) भणइ (F) ४ सअल (C) सकल (D & F) ५ णिभंती (B & C) णिभंता (D) णिभंति (E) णिभंता (F). ६ पवंगम (A & C). ७ दिट्ठो (B & C) ८ एक (B & C) एच (D & F) ९ वीसंति (A & E) वीसंता (D) वीसंता (F) १० ८८ (A) ८७ (F)

तिक्कलु[1] चउकल पंचकल तिअ गण दूर करेहु ।
छक्कलु[2] तिणि[3] पलंत[4] जेहि लहु गुरु[5] अंत मुणेहु[6] ॥
१८७[7](क) ॥ दोहा ।*

---

तथाच प्रथममेकः षट्कलस्ततश्चतुष्कलत्रयं ततो लघ्वादिस्त्रिकलः यत्र प्रतिचरणं पतति, तत् प्लवंग[म]नामकं वृत्तमिति फलितार्थः । (E).

१८६ । जत्येति ॥ यत्र प्रथमं षण्मात्रः पदे पदे दीयते, पंचमात्रश्चतुर्मात्रो गणोऽहिः क्रियते । अवश्यांते लघुर्गुरुरेकोऽपेक्ष्यते, मुग्धं प्लवंगमं छंदो विचक्षणमोह[शोभ]नं ॥ अहिः षट्कलः ॥ ८६ ॥ (G).

१८७ । तत्र विशेषमाह । पदे पदे आदौ गुरुकं पिङ्गलः प्रभणति सकलं निर्भ्रान्तः । प्लवङ्गमच्छन्दसि दृष्टा मात्राणामेकविंशतिः ॥ प्राथमिकः षट्कल आदिगुरुरिति । (C).

१८७ । [The gloss (E) is wanting here,—Ed.]

१८७ । पुनः स्पष्टमाह ॥ पअ इति ॥ पदे पदे आदौ गुरुः पिंगलो भणति सकलं निर्भ्रान्तिः । छंदः प्लवंगमं दृष्टं मात्राणामेकविंशत्या ॥ ८७ ॥ (G).

---

१८७ (क) । १ तिकल (A). २ छकल (A). ३ तिणि (A). ४ पलथंत (A). ५ गुरुथा (A). ६ मुणे (A), मुणेह (E). ७ ०८ (A). * N. B. This śloka is found in (A) and (E), but not in the others. The Commentary of (E) is silent also.—Ed.

जहा, णच्चइ चंचल विज्जुलिआ[1] सहि जाणए
मम्मह[2] खग्ग[3] किणीसइ[4] जलहर साणए।
[5]फुल्ल[6]कअंबअ[7] अंबर[8] डंबर[9] दीसए
[10]पाउस पाउ[10] घणाघण[11] सुमुहि वरीसए॥
१८८[12]॥ प्लवंगम[13]।

१८८। उदाहरति। नृत्यति चञ्चला विद्युल्लता सखि ज्ञायते, मन्मथेन खड्गः किं निश्यति[?] जलधरशाणके। फुल्लकदम्बकाम्बरे डम्बरो दृश्यते प्रावृष प्राप्य घनाघन सुमुखि वर्षति॥ निश्यति[?] निशात[त] क्रियते। (C)

१८८। अथ प्लवगममुदाहरति, हे सहि — सखि, यत् चचल विज्जुलिआ — चचला विद्युत् णच्चइ — नृत्यति, एत[अतो] मम्मह — मन्मथ जलहर साणए — जलधरशाणके मेघस्वरूपशस्त्रोत्तेजने यत्रे इत्यर्थः खग्ग किणीसइ — प[ख]ड्ग तीक्ष्णयति इति जाणए — ज्ञायते। फुल्ल कद्दवअ — पुष्पिता कदम्बका, अवराडवर दृश्यते, घनाघन वरीसए — वर्षति, अत हे सुमुखि पाउस पाउ — आइट् प्राप्ता न तु कांत इति भाव॥ (E)

१८८। १ विज्जुलआ (B & C) विज्जुलिअ (E) २ मम्मह (A & F) मम्मथ (D) ३ खग्गा (E) ४ किणीसइ (A) कणीसइ (F) ५ 3rd and 4th quadrants transposed in (E) ६ फुल्ल (A D & E) ७ कअंब (A) कअम्बअ (D) कदम्बअ (E) कम्बअ (F) ९ & ८ कम्बअ डम्बअ (C) ९ डम्बर (E) १० पमअ (A) ११ घणघण (L) १२ ९८ (A) ८८ (F) १३ प्लवगम (A), पवअम (B)

## अथ लीलावतीच्छंदः । (D).

गुरु[1] लहु[2] णहि[3] णिम्म[4] णिम्म णहि
अक्खर पलइ पओहर विसम समं
जहि[5] कहुँ णहि णिम्मह[6] तरल तुरअ[7] जिमि[8]
पसर[9] विदिस[10] दिस[11] अगम गमं[12] ।
गण पंच[13] चउक्कल[14] पलइ णिरंतर
अंत सगण धुअ[15] कंत[16] गणं[17]
परिचलइ[18] सुपरि[19] परि[20] लील[21] णिलावइ[22]
कल[23] बत्तीस विसामकरं[24] ॥ १८९[25] ।

---

१८८ । यथा ॥ णच्चेति ॥ नृत्यति चंचला विद्युत् सखि जानासि मन्मथस्य खड्गकणिशमियं, जलधरः शाणः। पुष्पितः कलंबः, अंबरे आडंबरो दृश्यते, प्रावृट् प्राप्ता, घनाघनः सुमुखि वर्षति ॥ ८८ ॥ इति प्लवंगमम् ॥ (G).

---

१८९ । १ & २ Transposed in (A). ३ & ४ Dropt in (A). ५ जड्ड (C). ६ णिम्म (A, D, E & F). ७ तुरच्या (A), तुरग (F). ८ जिम (B, C & E). ९ पसद्द (B), पसरद्द (C). १० दिस (A & B), दिसि (E). ११ दिसि (B & E). १२ चमं (E). १३ मत्त (F). १४ मउकल्ल (B), छडपथ (E), चउकल (F). १५ वुद्द (F). १६ कण (A & D). १७ गुणं (F). १८ चउ चरण (C). १९ धरि (C). २० Non est (F). २१ पील (A, B & C). २२ णिलावइ (A, B & C), लीलावइ (F). २३ परि (A), पथ (B & C). २४ विसामकरे (E), वीसामकरं (F). २५ ८० (A), ८९ (F).

१८८। अथ लीलावती। गुरुलघ्वोर्नहि नियम नियमो नहि अक्षरस्य पतति पयोधरो विषमसमयो, यत्र क्वापि नहि नियम तरलतुरगो यथा प्रसरति दिशि विदिशि अगम्ये गम्ये। गणा पञ्च चतुष्कला पतन्ति निरन्तरम् अन्ते सगणो ध्रुव कान्तो गम्यते चत्वारि चरणानि इला परिलोल-लीलावती-पद द्वात्रिंशद्विराम कर॥ कियन्तो गुरव कियन्तो लघव इति नियमो नास्ति कियदक्षर पाद इति नियमो नास्ति, पयोधरो जगणो विषमे समे च, दृष्टान्तो यथा चपलोऽश्व दिग्विदिक्प्रसरणे यत्र क्वापि न नियममङ्गीकरोति तथैवेत्यर्थ। चतुष्कलगणा पञ्चविधा द्विगुर्व्वादयस्ते यथेच्छ पुन पुनर्निवेशनीया, न तु पञ्चसङ्ख्यका इत्यर्थ, द्वात्रिंशत्कले पादे चतुष्कलगणान्तलस्यावश्यकत्वात् अयञ्च विशेष, सप्तगणा यथेच्छ चतुष्कला देया, अन्ते सगणो ध्रुवो नियत, कान्त कमनीय इति। केचित् कर्णगण पठित्वा सगण-कर्णगणयोरन्ते विकल्पमाहु। परिलोलेति परित सर्वतो लोला यस्य। परे तु चतुष्कलगणपञ्चकलानन्तर मात्राष्टकनियममित्याहु, साम्प्रदायिकास्त[स्तु]मनुमन्यन्ते पदस्य द्वात्रिंशन्मात्रासु विरामोऽवसान द्वात्रिंशन्मात्रक पदमित्यर्थ। (C)

१८८। अथ लीलावतीनामक वृत्त लक्षयति गुरु लहु इति। लहि — यत्र गुरु लहु णहि णिम — गुरोर्लघोर्नास्ति नियम:, एतावन्तो गुरव एतावन्तो लघवश्च यत्र पतन्तीति नियमो नास्तीत्यर्थ, अक्खर — अक्षरेऽपि णिम णहि — नियमो नास्ति, एतावत्यक्षराणि पतन्तीत्यपि यत्र न नियम इत्यर्थ, विषम सम —

विषमे [समे] पयोधरः जगणः पलइ—पतति इत्यपि कड्ड णहि णिम्म—कुत्रापि चरणे नास्ति नियमः, किन्तु गण पंच चउक्कल—गणाः पंच चतुष्कलाः चतुष्कलभेदात्मकाः पंचगणा इत्यर्थः, प्रस्तार-क्रियया चतुष्कलस्य पंच भेदाः ये भवंति ते सर्वेऽपि व्यस्ताः समस्ताः विपर्यस्ता इति हृदयं। ते कियंतः पतंति इत्यत्र हेतुः कल बत्तीसेति, तथा च द्वात्रिंशन्मात्राः पूरका अष्टौ चतुष्कलभेदा इति भावः, निरंतरमितरगणांतराव्यवहितमित्यर्थः पलइ—पतंति, अंत—अंते पादांते इत्यर्थः, कंत गण कांतगणः सगण-इत्यर्थः, ध्रुवं निश्चितं पत[ती]ति पूर्वेणान्वयः, यत्र छंदः जेम—यथा तरल तुरंग—तरलतुरगः, तथा विदिशि दिशि अगम गमं—अगम्ये गम्ये पसरइ—प्रसरति, सुपरि—पादे [?] परि-लील—परितः लीलया, परिचलइ—परिचलति, सा लीला-वती तत् लीलावतीनामकं वृत्तं, कल बत्तीस—कलासु द्वात्रिं-शत्सु विसाम करे—विश्रामं करोति इति योजना॥ यत्र सप्त-चतुष्कलानंतरं सगणः प्रतिचरणं पतति, सा लीलावतीति फलि-तार्थः। (E).

१८८। गुरु इति॥ गुरोर्लघोर्नास्ति नियमो नियमो नास्त्य-क्षरे पतति पयोधरो विषमसमयोः, यत्र कोऽपि नास्ति नियमः तरलतुरंगो यथा प्रसरति विदिक्षु दिक्षु अगम्यगम्ययोः। गणाः सप्त चतुष्कलाः पतंति निरंतरमंते सगणो बुधकांतगुणः, परि-चलति सुपरिलीलया लीलावती कला द्वात्रिंशद्विश्रामकरा॥ पयोधरो जगणः॥ ८८॥ (G).

जहा, घर[1] लग्गइ[2] अग्गि[3] जलइ[4] धह[5] धह[5]
कइ[6] दिग मग[7] णह पह अणलभरे
सब दीस[8] पसरि[9] पाइक्क लुणइ[10] धणि[11]
थणहर[12] जहण[13] दिआव[14] करे।
भअ[15] लुक्किअ[16] थक्किअ[17] वइरि[18]
तरुणि जण[19] भइरव[20] भेरिअ[21] सद्द[22] पले
महि लोट्टइ[23] पिट्टइ रिउ सिर[24]
टुट्टइ जक्खण[25] वीर हमीर[26] चले।
१९०[27] ॥ लीलावती। (A, B, C & F)

---

१९०। उदाहरति। गृहे लगित्वा अग्निर्ज्वलति धगधगिति कृत्वा दिङ्मार्गनभःपथा अनलैर्भृता सर्वदिक्षु पदातिका प्रसृत्य लुण्ठन्ति धनं, स्तनभारजघने दत्त्वा कर। भयेन गुप्यति गुप्ता तिष्ठति

---

१९०। १ सब (E) सब (F) २ लग्गिअ (B) लगर (C) लगिवर (E) लिगवर (F) ३ अग्गि (E) ४ जगर (F) ५ दह दिह (A) दह दह (B & C) ६ कवि (B) ७ दिगम (B) राति पह दिगमग (D) रति पह दिमग (F) ८ दिस (A) देस (D & F) ९ पसरिअ (A) १० लुटर (D & E) ११ धव (A, B & C) १२ थुणयण (A) थण (B) १३ जुम्बर (A) जघण (B C & E) १४ दिखाव (A) देखाव (B & C) दुराव (F) १५ भए (B & C) १६ & १७ Transposed in (A, B & C) १७ थक्किअ (A) थक्किअ (B) १८ वइरि (B) वैरि (D E & F) १९ जण (D & F) जन (E) २० भरवअ (D) भैरव (E) भैरव (F) २१ भरीअ (A B & C) रिथ (D) २२ सद्द (C) २३ लटर (D & F) २४ दिस (F) २५ जखण (A) जख (B C & E) २६ हमीर (B & C). २७ ८१ (A) ९० (F)

वैरितरुणी यदा भैरवो भेरवीरवः[भेरीरवः] पतति मह्यां लुठति पीड्यते रिपुशिरस्त्रुट्यति यदा वीरहम्मीरश्चलति ॥ इत्यादौ शत्रूणामित्यर्थः । (C).

१९० । अथ लीलावतीमुदाहरति, मव अरि घरेति । जस्मिन् वीर हमीर चले—यस्मिन् क्षणे वीरहम्मीरश्चलितः, तस्मिन् क्षणे इति शेषः सर्व[व] अरि घर—सर्वारिगृहेषु अगि—अग्निः धह धहेत्यनु[नु]करणं [कइ—] कृत्वा जलइ—ज्वलति, दिग मग णह पह—दिङ्मार्गः नभःपथः अणलभरे—अनलभृतः अग्निना परिपूर्णं इत्यर्थः जात इति शेषः, धण थण हर जघण दे‍आव करे—धनिमानभरजघनदत्तकरः धनिनीनाम् अरिविदग्धानां स्तनभरे जघने च दत्तः करो येन स तादृश इत्यर्थः पाइक—पदातिः सव दीस पसरि—सर्वदिक्षु प्रसृत्य लुरइ—चलति, भेरव भेरिअ सद पले—भैरवभेरीशब्दः पतति, भअ लुक्किअ थक्किअ—भयनिलीनस्थगितः बेरि तरुणि अण—वैरितरुणीजनः महि लुट्टइ—मह्यां विचेष्टते, पिट्टइ—ताड्यति खेदयतीति भावः, रिउ सिर टुट्टिअ—रिपुशिरांसि त्रुटति ॥ (E).

१९० । सवेति ॥ सर्वरिपुगृहेषु अग्निर्लगति धगधगशब्दं कृत्वा, नास्ति पंथा दिग्मार्गेषु अनलो भृतः, सर्व्वदेशे प्रसरंति पदातयः, लुठंतीनां रिपुगृहिणीनां स्तनभरो जघनं द्विधा करोति ॥ भयेन निलीनः स्थगितो वैरितरुणीगणो भैरवे भेर्याः शब्दे पतिते मह्यां लुटति पिट्टयति देहं शिरस्त्रुटति यत् क्षणे वीरो हंमीरश्चलितः ॥ ९० ॥ इति लीलावती ॥ (G).

अथ हरिगीताच्छंद. । (D).

गण चारि पंच कल[१] ठविज्जसु बीअ[२] ठामहि[३] छ[क्ष]कलो
पअ पअह[४] अंतहि[५] गुरु करिज्जसु वणणेण[६] सुसब्बलो[७] ।
दह[८] चारि[९] दुक्कइ[१०] दह दु माणहु[११] मत्त ठाइस[१२] पाअओ[१३]
हरिगीअ छंद पसिद्ध जाणहु[१४] पिंगलेण पआसिओ[१५] ॥
१९१[१६] ॥

१९१ । अथ हरिगीताच्छन्द । गणाश्चत्वार पञ्चकल स्थाप्यन्तां द्वितीये स्थाने षट्कल, पदे पदे अन्ते गुरु क्रियतां वर्णनेन सुप्रबल । दश स्थापयित्वा तत्पश्चात् द्वौ मानय मात्रा अष्टाविंशतिर्मानय पिङ्गलेन व्याख्यातम् ॥ अयमर्थ — चत्वार पञ्चकला कर्त्तव्या, तत्र प्रथमगणानन्तर षट्कल, तदनन्तर अथ पञ्चकलास्तत्रैको गुरुरेव क्रमेण प्रतिपादमष्टाविंशतिर्मात्रा भवन्ति, वर्णनेन समीचीनवर्णनेन सुप्रबल मिश्रित [यदा] वर्णनेन महाप्राणाक्षरेण सुप्रबल बलवदित्यर्थ, दशाङ्क स्थापनीय दशाङ्केन च पूरणीयमिति तत्पश्चात्शब्दार्थ, तेन तत्र गुणन

१९१ १ कल (A C & E) कलु (B) कल (D) २ बिअ (E) ३ ठामह (B & C) ४ च non est (B & C) ५ पअह (A) अन्तहि (D) ६ Dropt in (E) ७ सुसब्बलो (A) सुसब्बलो (F) ८ दैह (C) ९ चारि (C) १० ठक्कइ (A) करइ (B & C) दुइ (E) ११ दुमाणह (B & C) पमाणहु (D) दुइ पमाणहु (E) १२ अट्ठाईस (A B, C & E) १३ पाओ (A) पओ (B) पअओ (C) ओ (E) १४ माणहु (A B & C) जाणह (D) १५ पआसिओ (A B & C) पआसि (E) १६ ८६ (A) ९१ (F)

कृतिरिति ज्योतिःशास्त्रं । इत्यञ्च शताङ्के निष्पन्ने दश द्वावित्यनेन द्वादशाधिकं शतमात्रं छन्द इत्यर्थः । इदमेव कृतमि[द]त्युक्तम्, अट्ठाइसेति, पादस्याष्टादश[विंशति]मात्रत्वादिदं सिद्धमित्यर्थः। षट्-दश[?]दश द्वादश-द्वावि[?]त्येषां योजनेऽष्टाविंशतिसंख्या-भवन्ति । (C).

१८१ । अथ हरिगीतनामकं वृत्तं सूचयति, गण चारि[री]ति । पञ्च पञ्चहि[इ]—पादे पादे प्रतिचरणमित्यर्थः प्रथमं गण चारि—गणांश्चतुरः पंचकलान् ठविज्जसु—स्थापयत, बीअ ठामहि—द्वितीये स्थाने प्रथमपंचकलगणानंतरमिति यावत् छक्कलो—षट्कलान् स्थापयतेति पूर्वेणान्वयः, तथाच कर्त्तव्येषु चतुःपंचकलेषु प्रथमपंचकलानंतरमेकं षट्कलं संस्थाप्य अनंतरमुर्वरितास्त्रयः पंचकला गणाः कार्या इति पर्यवसितोऽर्थः। अंतहि—अंते पादांते इत्यर्थः गुरु करिज्जसु—गुरुमेकं कुरुत, दह चारि दुइ दह दुइ—दश चतस्रः द्वे दश द्वे एवं मत्त अट्ठाईसओ—मात्रा अष्टाविंशतिः पमाणउ—प्रमाणयत पिंगलेण पआसिओ—पिंगलेन प्रकाशितं, वण्णेण सुसव्वलो—वर्णनेन सुसवलं सुतरां सवलं समीचीनमित्यर्थः पसिद्ध—प्रसिद्धं हरिगीअ छंद—हरिगीतं छंदः जाणउ—जानीत ॥ प्रथममेकः पंचकलस्तत एकः षट्कलस्ततस्त्रयः पंचकलास्तत एको गुरुः यत्र पतंति, तदष्टाविंशतिमात्राकचरणं हरिगीतनामकं वृत्तमिति फलितार्थः । (E).

१८१ । गणेति ॥ गणाश्चत्वारः पंचकलाः स्थाप्यंतां द्वितीये

बीए[1] छक्कलु[2] ठावि[3] कहु[4] चारि पंचकल[5] देहु।
बारह उत्तर मत्त[6] सउ माणसु[7] अंत ठवेहु ॥ १९२[8] ॥
दोहा।

स्थाने षट्कलं पदे पदे अन्ते गुरुः क्रियतां वर्णनेन च सकल पुनः प्रकारेणैतदाह ॥ दहेति ॥ दश १० चत्वारि ४ द्वि २ कल दश १० द्वौ २ मानय मात्रा अष्टाविंशति पादे ॥ हरिगीत छन्द प्रसिद्धं जानीत पिङ्गलेन प्रकाशितम् ॥ ९१ ॥ (G)

१९२। इदमेव स्पष्टयति। द्वितीये षट्कलं स्थापयित्वा चतुरः पञ्चकलान् देहि। द्वादशोत्तरमात्राशतकं मानवमन्ते कुरु ॥ शतकमित्य[नन्त]र छन्दो भवतीति पूरणीय, मानवशब्दो गुरुवाची। (C)

१९२। अथैनमेवार्थं दोहावृत्तेनाह, बीए छक्कलु इति। अत्र हरिगीतच्छन्दसीत्यध्याहरणीय चारि पचकल — चतुरः पञ्चकलान् देह — दत्त। बीए — द्वितीये स्थाने प्रथमपञ्चकलानन्तरमित्यर्थः छक्कलु एक कहु — षट्कलमेकं कथयत अंते — पादांते माणव — मानवमेकं गुरुमित्यर्थः ठवेहु — स्थापयत, बारह उत्तर — द्वादशोत्तरा मत्त सउ — मात्रा शत चतुश्चरणसमुदिता जानीतेति शेषः ॥ (E)

१९२। १ बिष ठाइ (F) २ छक्कल (A) ३ एक (E) रख (F) ४ कहु (C) ५ पचकलु (B) पचकलु (F) ६ Dropt in (C) ७ माणव (E) ८ ९२ (A) ९१ (F)

जहा, गअ गअहि ढुक्किअ तरणि[1]
लुक्किअ तुरअ तुरअहि[2] जुज्झिआ[3]
रह रहहि मीलिअ[4] धरणि पीलिअ
अप्पपर[5] णहि वुज्झिआ[6] ।
वल मिलिअ[7] आइअ[8] पत्ति जाइउ[9]
कंप[10] गिरिवर[11] सीहरा[12]
उच्छलइ[13] साअर दीण[14] काअर
वइर[15] वड्ढिअ[16] दीहरा[17] ॥ १९३[18] ॥
हरिगीता[19] । (A, B & F).

---

१९२ । द्वितीये स्थाने षट्कलमेकं कथय, चतुरः पंचकलान् देहि । द्वादशोत्तरं मात्राणां शतं मानसमंते स्थापय ॥ मानसं गुरुः ॥ ९२ ॥ (G).

१९३ । उदाहरति । गजा गजैर्ढौकितास्तरणिर्लुप्तः, तुरगा-

---

१९३ । १ तरणि (B), dropt in (C). २ तुरहि (B). ३ जुज्झि (B & C), जुज्झि (D & F). ४ मीलिय (B & F), dropt in (C). ५ पिय अपर (A & C), पेख पर (B). ६ वुज्झि (A & D). ७ मिलइ (A), मिल (B & C), मिलिय (F). ८ पत्ति उ (B & C), आइउ (D, E & F) (here इ short). ९ जाइय (A), धाइउ (D & E), धावउ (F). १० कम्पि (B & C). ११ Non est (B), गिरवर (D). १२ सिंहरा (F). १३ उच्छलइ (A), उछलइ (B), उछरइ (D), उछलिय (E). १४ दिण (D & F). १५ वरिर (C), वैर (D & E), वैरि (F). १६ वढ्ढिय (B), वढ्ढिय (C), वढिय (F). १७ दीहरी (E). १८ ८४ (A), ९२ (F). १९ हरिगीया (C).

खरायुक्तैः रथैः पीडिता धरणी पतिताः, निजाः परे यदि युद्धा बलेन भीताः आगताः पत्तयो धाविताः कम्पते गिरिवरशिख रम्, उच्छलितः सागरः दीनाः कातरा वैरं वर्द्धितं दीर्घम् ढौकिताः संलग्नाम्बरपिण्डैः समरभूमिसमुत्थितधूलिभिरित्यर्थ वैर वैरिणां कथं युद्धमित्यर्थः। वैरीति पाठे वैरिणो वर्द्धित इत्यर्थः। तथा च दीर्घं चिरकालं भोजनादिना वर्द्धिता वैरिणस्तेऽपि दीनाः कातरा वा इति लभ्यते। (C).

१८६। अथ हरिगीतमुदाहरति गअ गअहीति। गजा गजै सह दुक्खिअ—ढौकिता युद्धार्थं मिलिता इत्यर्थ, तुरअ तुर अहि—तुरगास्तुरगैः सह जुज्झिआ—अयुध्यम[न्त], रह रहहि- रथा रथैः सह मीलिअ—संयुक्ताः युद्धाय मिलिता इत्यर्थ धरणि पीलिअ—धरणिः पीडिता, तरणि—तरणिः सूर्य लुक्किअ—आच्छन्नः हयगजपादोद्धतधूलिभिरिति भाव, अत एव अप्प पर—आत्मीयाः एते परकीया इति न वि[वे]क आसीदित्यर्थः, बल—बलानि सैन्यानि मिलिअ—एकीभूय आएउ—आगतानि, पत्ति—पत्तय[ः] धाएउ—धाविताः गिरिवर सीहरो—गिरिवरशिखराणि कंप—कम्पितानि, साअर- सागराः उच्छलिअ—उच्छलिताः, काअर—कातराः रणभीरवो वा इत्यर्थः दीण—दीना आसा इति शेष, दैन्यमाश्रिता इत्यर्थ, दीहरा—दीर्घं वैर बड्डिअ—वैरं वर्द्धितं, कथं युध्यमाने सतीति शेषः॥ (E)

१८९। यथा॥ गअ इति॥ कश्चिद्युद्धं वर्णयति। गजा गजै-

## अथ त्रिभंगीच्छंदः । (D).

पढमं दह रहणं[1] अट्ठवि[2] रहणं
पुणु वसु[3] रहणं रसरहणं
अंते गुरु सोहइ महिअल[4] मोहइ
सिद्धि[5] सरो[6] हइ वरतरुणं ।
जइ पलइ[7] पओहर[8] किमइ[9] मणोहर[10]
हणइ[11] कलेवर[12] तासु कई
तिभंगी[13] छंदं सुक्खा[14] णंदं
भणइ[15] फणिंदो[16] विमलमई ॥ १९४[17] ॥

---

मिलितास्तरणिराच्छादितस्तुरगास्तुरगैर्युद्ध्यंते, रथा रथैर्मिलिताः धरणिः पीडिता आत्मीयः परो न बुध्यते । बलान्येकीभूयागतानि पत्तयो धावंति कंपंते गिरिवरशिखराणि, उच्छलति सागरो दीनाः कातरा वैरिणो वृद्धा दिवसाः ॥ इति हरिगीतं छंदः ॥ (G).

---

१९४ । १ रणं (B). २ अट्ठइ (A & E), अट्ठवि (B), dropt in (C), र too many in (D). ३ Dropt in (B), रहु हरणं (D). ४ तिरुअण (D), तिऊवण (F). ५ सिद्ध (D, E & F). ६ सरा (E & F). ७ लइ (B). ८ पओहर (B & C). ९ किमइ (A). १० मणोहर (B & C), णोहर (E). ११ हरइ (D), करइ (F). १२ कलेवर (B & C). १३ तिरभङ्गी (B & C), तिभंगी (F). १४ जणिश्चा (D), जणश्चा (F). १५ भण (B). १६ भणीन्दं (B). १७ ८५ (A), ९४ (F).

१८४। अथ विभङ्गी। प्रथमं दशसु रहण, अष्टस्वपि रइ पुनर्मसुरहण रसेषु रहणम् अन्ते गुरु शोभते, महि मोह मोहयति सिद्धे सरो भवति बरतर[ोण। यदि पतति पयोध किमिद मनोहर हन्ति कलेवर तस्य कवे विभङ्गीच्छन्द सुख नन्द भणति फणीन्द्रो विमलमति॥ दशसु मात्रासु रइ विश्राम', एवमग्रेऽपि, इत्थञ्च द्वात्रिंशन्मात्र पादो भवति अन्तिमो गुरुरपि तदन्तपाती, सिद्धेर्दुर्नादिसिद्धिरिव वरं तर सरो भवति छन्दसो विशेषणम्। अत्र जगणो न देय इति सुखेन दुःखाभेदेनानन्दयति इति सुखानन्दम्। अत्र सर्वत्र चतुष्कला कार्या इति सम्प्रदाय। (C)

१८४। अथ चिभगीनामक वृत्त लक्षयति पढममिति। पढ —प्रथममादौ दह—दशसु मात्राखिति शेष', अग्रेऽपि यथा योग्य योजनीय, रहण—विश्राम', तत अट्ठह—अष्टसु मात्रा खित्यर्थ विश्राम, तत रसरहण—रसेषु षट्सु तथाच रस मखोपलक्षितासु षट्सु मात्रासु इत्यर्थ रहण—विश्राम', ए द्वात्रिंशन्मात्रा प्रतिचरण पतती[ति] शेष', अन्ते—पदान्ते गुरु सोहइ—शोभते, कर्त्तव्यास द्वात्रिंशन्मात्रासु अतिसमाप्तावयमेक गुरुस्वरूप कार्यमित्यर्थ', तत् तिभगीछद—चिभगीच्छद तिङ वण मोहइ—त्रिभुवन मोहयति, महि अस इति पदं महीतलमित्यर्थं, अग्रे सिद्ध भरतरुण—तरुणवर लोकस्येयर्थ सराहइ—श्लाघते। अत्र यदि पओहर—पयोधर मध्यगुरुर्जगण इत्यर्थ पलइ—पतति, तदा किमइ मणोहर—किमपि मनो-

जहा, सिर किज्जिअ[1] गंगं गोरि अधंगं
हणिअ अणंगं पुर दहणं[2]
किअ फणिवइ[3] हारं तिहुअण[4] सारं
वंदिअ छारं रिउ महणं[5]।
सुरसेविअ चरणं मुणिगण[6] सरणं
भवभअ[7] हरणं सूलधरं[8]
साणंदिअ[9] वअणं सुंदर णअणं[10]
गिरिवर सअणं[11] णमह हरं॥
१९५[12]॥ त्रिभंगी। (A, B, C & F).

---

हरं न भवतीति शेषः, किंतु येन तच्छंदसा कवित्वं क्रियते तासु कई—तस्य कवेः कलेवरं शरीरं हणइ—हंति, इति विमलमई—विमलमतिः, जणिआणंद—जनितानंदः, क्वचित्सुक्खाणंदं इति पाठः सुखी आनंदीत्यर्थः, फणिंदो—फणींद्रः पिंगलः भणइ—भणति। अत्र चतुर्मात्रिका अष्टौ गणाः प्रतिचरणं देयाः, तेष्वेवांतिमो गणो गुर्वंतः कर्त्तव्यः, पूर्वोक्तमात्रासु विश्रामः कर्त्तव्य इति फलितार्थः। (E).

---

१९५। १ किज्जइ (C), किज्जिय (D). २ हरणं (B). ३ फणिवम्मि (B), फणिवइ (D). ४ तिहुयण (E). ५ दहण (B & C). ६ मुणियण (D & F). ७ भय भय (A). ८ सूलहरं (B & C), सलधरं (E). ९ सणंदिय (F). १० णयण (B). ११ सरणं (A & B), dropt in (C). १२ ८९ (A), ९५ (F).

१८४। दुर्मिलामाह [त्रिभङ्गीमाह] ॥ पढम इति ॥ प्रथमं दशविरतिरष्टस्वपि विरतिः पुनर्वसुविरतिः, अंते गुरुः शोभते, त्रिभुवनं मोहयति सिद्धा श्लाघयति वरतरुणम्। यदि पतति पयोधरः किमपि मनोहरो हरति कलेवरं तस्य—[तस्य] कर्णे, त्रिभङ्गीच्छन्दो जनितानन्दं भणति फणीन्द्रो विमलमतिः ॥ वसवोऽष्टौ, रसाः षट्, यदीति जगणः कविनायकः, तस्मात्र कार्य इति भावः ॥ ८४ ॥ (G)

१८५। उदाहरति । सिरकृत[गंग] गौर्यर्द्धाङ्ग हतानङ्ग पुरदहन कृतफणिपतिहार त्रिभुवनसार वन्दितभस्मान रिपुदहन। सुरसेवितचरणं मुनिगणशरण भवभयहरण शूलधर सानन्दितवदन सुन्दरनयन गिरिवरशयन नमत हरम् ॥ वदित हार तिलकीकृतभस्मानमित्यर्थः। (C)

१८५। अथ त्रिभङ्गीमुदाहरति सिर किज्जिअ इति। सिरकृतगंग गौर्यर्द्धाङ्ग हतानङ्ग त्रि[?]पुर[द]हन कृतफणिपतिहार त्रिभुवनसार वंदितभस्मान रिपुम[?]मथन। सुरसेवितचरण मुनिगणशरण भवभयहर त्रिशू[ल]धर, सानन्दितवदन सुन्दरनयन गिरिवरशयन नमत हरम् ॥ (F)

१८५। यथा ॥ सिरेति। सिरकृतगंगं गौर्यर्द्धाङ्ग हतानङ्ग पुरदहन कृतफणिपतिहार त्रिभुवनसारं वंदितभस्मानं रिपुमथन। सुरसेवितचरण मुनिगणशरण भवभयहरण शूलधरं सानन्दितवदन सुन्दरनयन गिरिवरशयन नमत हरम् ॥ ८५ ॥ इति त्रिभंगी ॥ (O)

## अथ दुम्मिलाच्छंदः । (D).

तीस दुइ[1] मत्ते[2] एरिसं[3] जुत्ते[4]
बुहअण राअ[5] भणंति[6] णरा
विसम त्तिअ[7] ठामहि[8] एरिस[9] भाअहि[10]
पअ पअ दीसइ[11] कण्ण घरा[12] ।
ता[13] दह[14] पढमं वे[15] अट्ठ ट्ठाअं[16]
तीअ[17] चउद्दह[17] किअ[18] णिलओ
जो एरिसि[19] छंदे तिहुअण वंदे
सो जण[20] बुज्झउ[21] दुम्मिलओ ॥ १९६[22] ॥

---

१९६ । द्वात्रिंशन्मात्राभिरेतादृशीभिर्युक्ता बुधजनराज भणन्ति नराः, विश्रामस्त्रिषु स्थानेषु एतादृशभागः पदे पदे दृश्यते कर्ण-गृहं । तत् दशस्य रहणं प्रथममेव, अष्टस्तु द्वितीय एव, चतुर्दशस्य

---

१९६ । १ दु (A, D & E). २ मत्तउ (D), मत्तहि (F). ३ एरिसि (A, C & F), एरसि (B), परिसं (D & E). ४ जुत्तउ (D), जुत्तहि (F). ५ राउ (A, B & C). ६ भणंति (A), बलन्ति (B), भणन्ति (C), भणइ (F). ७ विसमं तिअ (E & F). ८ ठावहि (A), थाइ (B & C), ठाएहि (D), ठाअहि (E). ९ एरिसि (B & C), दिसि (F). १० भावहिँ (A), भाअइ (B & C), भाएहिँ (D), भाए (F). ११ दीसहिँ (D). १२ धरा (A, D & F). १३ जा (E). १४ दसवइ (C). १५ चे (A & B), च (C). १६ चउ दीअ चे (A), dropt in (B), चइ दीअ (C), चउ ठाअ तहँ (D & F). १७ Transposed in (B & C), चौदह तीअहिँ (D), चौदह तीअं (E), dropt in (F). १८ किअ (A & C). १९ एरिस (A & E). २० जग (A), जइ (B & C). २१ बुज्झइ (A, B & C), बुज्झउ (D). २२ ८७ (A), ९९ (F).

तृतीये कृतनिलय, यत्र एतादृशच्छन्दस्त्रिभुवनवन्द्य [न्द्यो] स तत् यदि बुध्यते दुर्मिलक॥ एतादृशैर्भिस्त्रिभङ्गुरकलचतुष्कमिलिन जगणच्युदास। बुधजनराजेति सम्बोधन। चरन्ति वदन्ति, एता दृशभागैर्वक्ष्यमाणभागै, कर्ण एव गृह स्थान यस्य, तेन कुण्डल लभ्यते, तेन गुरुरायाति, तेन चान्ते गुरुरिति फलितार्थ। गुरु गणान्तर्गत इति बोध्य, विश्रामस्थान दर्शयति तदिति, दशसु मात्रासु, एवमपेऽपि कृतविश्राम। (0)

१८६। अथ दुर्मिला लक्षयति, तीस दुइ मत्त इति। हे नरा एतत् तीस दुइ मत्ते—द्वात्रिंशन्मात्राभि परिसजुत्ते—परिसयुक्ते यत्र च एरिस भाअहि—एतादृशभागै एतादृशे अनुपदमे[व] वक्ष्यमाणे भागे कलांशैरित्यर्थ, तिअ ठामहि—त्रिषु स्थानेषु विसम—विश्राम दीसइ—दृश्यते, यत्र च पअ पअ—पादे पादे कण्ण धरा—कर्णगृह कर्णो द्विगुरुको गणस्तस्य गृह स्थापन मित्यर्थ, दृश्यते इति पूर्वेणैवान्वय। कुत्र स्थानत्रये विश्रामौ दृश्यते इत्यत आह पढममिति। यत्र च पढम—प्रथम दह—दशसु मात्रास्वित्यर्थ णिलओ—निलय विश्राम इति यावत् किन्न—[कुरु]त इद चायेऽपि योज्य बे—द्वितीय अट्ठ ठाअे—अष्टमस्थाने अष्टसु मात्रास्वित्यर्थ निलय कृत इति पूर्वानुषग, तीअ—तृतीय चउदह—चतुर्दशसु मात्रास्वित्यर्थ निलय कृत जो एरिम छदे—यत् एतादृश छदस्त्रिभुवनवद्य तत् न जना जा नी त दुर्मिलकम् इति बुधजनराज पिगल भणति—भणति॥ (6)

दह[1] वसु चउदह[2] विरइ करु विसम कण्णगण देहु[3] ।
अंतर विप्प पइक्क गण[4] दुम्मिल छंद कहेहु[5] ॥ १९७[6] ॥
दोहा ।*

---

१९६ । [दुर्मिलामाह] तीसेति ॥ त्रिंशद्भिद्वाभ्यां परिसंयुक्तं बुधजनराजो भणति नराः, विश्रामस्त्रिषु स्थानेषु एतादृशं भाति पदे पदे दृश्यते कर्णधरः । तत् दशसु प्रथमो द्वितीयोऽष्टमे स्थाने तथा तृतीयः कृतनिलये, यदेतादृशं छंदस्त्रिभुवनवंदितं तज्जनो बुध्यतु[तां] दुर्मिलां ॥ द्वात्रिंशन्मात्रा[भि]रित्यर्थः, कर्णधरो द्विगुरुः, निलयेऽन्त्यस्थाने ॥ ९६ ॥ (G).

१९७ । अथैनमेवार्थं दोहावृत्तेन स्पष्टयति दहेति । दशसु वसु—अष्टसु चतुर्दशसु मात्रास्विति शेषः विरइ करु—विरतिं कुरु विसम—विषमे स्थाने कण्णगण देहु—कर्णगणं देहि । पद-मध्ये विषमे स्थाने यथाशक्यं द्विगुरुकं गणं देहीत्यर्थः । अंतर—मध्ये विप्प पइक्क—विप्रं चतुर्लघुकं गणं पदातिं सामान्यचतुष्कलं भण दुर्मिलाच्छंदः कथय ॥ अत्र प्रतिचरणं विषमस्थाने यथाशक्यं प्राचुर्येण कर्णो देयः समे चेत्तत्पतति तदा न बाधकमिति द्रष्टव्यम् । (E).

---

१९७ । १ नह (F). २ चौदह (F). ३ देहा (D), देह (F). ४ मल (A), भण (D & E). ५ सुणेहु (A), कहेह (D & F). ६ ८८ (A), ९७ (F).
* This is not found in (B & C).—Ed.

जहा, जे[1] किज्जिअ धाला जिसु[2] णिवाला[3]
भोट्टंता[4] पिट्टंत[5] चले
भंजाविअ[6] चीणा दप्पहि हीणा
लोहावल[7] हाकंद पले।
ओड्डा[8] उड्डाविअ[9] कित्ती[10] पाविअ
मोलिअ[11] मालव[12] राअ[13] बले[14]
तेलंगा भग्गिअ[15] पुणवि[16] ण लग्गिअ[17]
कासीराआ[18] जखण चले॥
१९८[19]॥ दुम्मिला[20]। (A).

---

१९०। दोहेन[छया] प्रकारांतरमाह ॥ दहेति ॥ दशसु वसुषु चतुर्दशसु विरतिं कुरु, विश्रामे कर्णगणान् देहि। अतरा विप्रं पदातिगणं दुर्मिलां छंदः कथय॥ वसवोऽष्टौ, कर्णौ द्विगुरु, विप्रश्चतुर्लघुः, पदातिः मात्राचतुष्टयरूपः॥ ९०॥ (G)

१९८। उदाहरति। ये कृतधाटिका जितनेपाला भोटान्ताः

---

१९८। १ जेइ (D), जद (F) २ जिसु (A), जिवि (C) ३ णेवाला (A, B, C & E) ४ भोअंता (E & F) ५ पिइ (C) ६ भआविअ (A), भआरिअ (D), जभारिअ (F) ७ लोहावर (A) ८ ओड्डा (B), ओड्डर (D) ९ ओड्डाविअ (A), ओड्डारअ (B) १० कीती (B & C). ११ Drops ण (B & F) १२ माला (D), मण (F) १३ राउ (C & F), रउ (D). १४ कुले (C & E). १५ भग्गा (A) १६ भअड (A & B), भअदि (D), भअभि (E), भअनि (F) १७ लग्गा (A) १८ कुस्सरराअ (B) कासीसरराअ (C), कासीसरराअ (D & F), कासीसरराआ (E) १९ ८९ (A), ९८ (F) २० दुम्मिलअ (B & C), दुम्मिलअ (F)

अथ हीरः। (B).

गाउ[1] पभण तिणि[2] छगण अंत करहि[3] जोहलं
हार[4] टविअ जंपु[5] सुपिअ[6] विप्प गणहि सव्वलं।
तिणि[7] धरहि[8] वेवि करहि[9] मत्त पअहि[10] लेक्खुए
कोइ[11] जणइ[12] दप्प[13] भणइ हीर सुफइ[14] पेक्खए[15] ॥
१९९[16] ॥

पीडमानाश्चलन्ति भग्नचीना दर्पहीनाः लोहवन्तेन[?] हम्मन्दः। ओड्रान् ओव्वरिला कीर्त्तिः प्राप्ता मोटितो मालवराजः तेलङ्गा भग्नाः पुनर्न लग्नाः काशीश्वरराजो यदा चलति॥ हतधाटिकाः हतश्रेणीका ये नेपालास्ते जिता इत्यर्थः। (C).

१९८। अथ दुर्मिलामुदाहरति जे किज्जिअ इति। येन कृता धाटी पाविअ कित्ती—प्राप्ता कीर्त्तिः स काशीश्वरराजः जखुण—यस्मिन् चणे, जितः नेपालः भोटांताः स्वदेशं ताडयन्त—श्चलिताः, दर्पहीनाः चीनाः भग्नीकृताः लोहावलेहाखमन्दुः पतितः। ओड्डावितः अंतरिचं प्रापितः ओड्ः, मोटितं मालवराजकुलं, तैलंगाः पलायिताः परावृत्य नागताः॥ (E).

१९९। १ गाथ (F). २ तिणि (A). ३ करि (A). ४ हार (A). ५ जाइ (A), जप्पु (B), जम्प (C), ठुपवि (D), ठुपवि (F). ६ सुविश्च (C). ७ तिणु (B). ८ धरवि (A), धरइ (B & C). ९ करइ (B & C). १० पअइ (B & C), चंत रगण (D & F). ११ कोध (A), कमण (D & E). १२ जणउ (E). ११ & १२ after सप्प भणइ (C). १३ सप्प (A, B & C). १४ सुकवि (F). १५ पेक्खप (A), ऐक्खए (B & C), लेक्खए (E). १६ ९० (A), १०० (F).

भणिअ सुपिअ' गण मर ल्हु' सहिओ
तह' दिअवर जुअ कारअल' लहिओ ।
घउ घउकल गण पअ पअ' मुणिओ'
सरइ' सुपिअ काइँ फणिवइ भणिओ ॥ १६६' ।

१६५ । वहति मलयवातो हन्त कम्पते काय शृणोति श्रवणरन्ध्र कोकिलालापबन्धा । श्रूयते दशदिक्षु भृङ्गझङ्कारभार हन्ति हन्ति हन्त चण्डचण्डालमार ॥ बन्धा प्रबन्धा', हन्ते इति चेटीसम्बोधन, मार' काम । विरहिण्युक्तिरियम् । (C)

१६५ । मालिनीमुदाहरति, वहईति । हे हञ्जे—चेटिके मलय वाआ—मलयवात वहइ—वहति, हन इति खेदे, काआ—काय' कपन—कंपते, कोइला लाव बधा—कोकिलालापबन्ध सवण रधा—श्रवणरन्ध्रे हणइ[—ह]ति । भिम झंकार भारा—भृङ्गझंकारसमूहा' दह दिहासु—दशदिक्षु सुणिअ—श्रूयते, घड घडाक्ष मारा—घण्ड घण्डाक्षमार घण्डो महाक्रोधी घण्डाल इव घण्डालस्तद्वधितुर' मार' काम' हणिअ—हत मलयवण जन हणइ—हति ॥ मलयवातादिभिर्हतां मां यदयं कामो हति कोऽयमस्य पुरुषार्थं, मत्प्रिय हन्ता मदङ्ग यदि भवति तदैव परम-

१६६ । १ भणिअ A) सुपिअ F) २ पअ मअ (A) एअ मअ (B) ३ जार (F & F) ४ दिअ वरजुअ पअ पअ (A & B) दिअ वरजुअ पअ पअ (C) ५ गहु (A) ६ मुणिओ (A) ७ सरल (L) ८ मअ (A, B & C) ९ १६१ (A)

पुरुषार्थिनं मन्ये इति गूढाभिप्रायायाः कस्याश्चिद्वाक्यमेतत् । मालिनी निवृत्ता । (E).

१६५ । यथा । वहति मलयवातो हंत कंपते कायः हंति श्रवणरंध्राणि कोकिलालापबंधः । श्रूयंते दशदिक्षु भृंगझंकारभाराः हता हंति हंजे चंडः चंडालो मारः ॥ पुनः पुनर्हंतीत्यर्थः, हंजे चेटिके इति संबुद्धिः । (G).

१६६ । भणितः सुप्रियगणः सर्वल[घु]सहितः तत्रापि च करतलं पादे पादे लग्नं । चतुश्चतुष्कलो गणः पदतले जातः शरभः सुप्रिय ज्ञायतां फणिपतिभणितः ॥ सुप्रियो द्विलघुः, ततः पञ्च लघवः तत्रापि पञ्च लघवः, करतलमन्तलघु[गुरु]श्चतुष्कलः, सुप्रियेति सम्बोधनं । (C).

१६६ । अथ पंचदशाक्षरचरणस्य वृत्तस्य चतुरशीत्युत्तरद्वि[त्रि]-शताधिकषोडशसहस्रतमं [१६३८४] भेदं सरभनामकं वृत्तं लक्षयति, भणिअ इति । यत्रादौ सर लहु सहिओ — सरलघुसहितं सर — सरः एकलव्यात्मको गणः अथच लघुभ्यां युक्तमित्यर्थः सू[सु]पिअ गण सुप्रियगणं सुप्रियो द्विलव्यात्मको गणस्तमित्यर्थः भणिअ — भणिता, दिअवर जुअ [कर‍अ]ल — द्विजवरयुग-करतलौ द्विजवरश्चतुर्लघ्वात्मको गणस्तद्युगं करतलौ गुर्वंतसगणस्तावित्यर्थः लहिओ — लब्धौ, एवंप्रकारेणेति शेषः जह — यत्र चउ चउकल गण — चत्वारश्चतुःकला गणाः पअ पअ — पादे पादे प्रतिपाद-मिति यावत् मुणिओ — ज्ञाताः हे सुपिअ — सुप्रिय शिष्य तत् फणिवइ भणिओ — फणिपतिभणितं सरभ — सरभं कह — कथय

जहा, तरल कमलदल सरि जुअ णअणा
सरअ समअ ससि सुसरिस[1] बअणा[2]।
मअ गल[3] करिवर सअलस गमणी
कमण सुकिअ[4] फल विहि[5] गठ[6] रमणी ॥
१९७[7] ॥ सरभ[8]।

---

सरभनामक तद्वृत्तमित्यर्थ ॥ अत्र पुनश्चतुष्कलचतुष्टयकथन पद पूरणार्थमेव नगणचतुष्टयोत्तरसगणरचितचरण सरभनामक वृत्त मिति फलितार्थ इति ध्येयम्। (E)

१९६। भणीति। भणित्वा सुप्रियगण शरलघुमहित यत्र द्विज वरयुग करतलमहित। चत्वारश्चतुष्कला गणा पदे पदे ज्ञातव्या शरभ सुप्रिये कथय फणिपतिभणित ॥ शरो लघु ताभ्यां सहित सुप्रियो द्विलघु, द्विजवरश्चतुर्लघु, करतल सगण। (G)

१९७। उदाहरति। तरलकमलदलसदृशनयनयुगा शरत्समय शशिसुसदृशवदना। मदकलकरिवरसालसगमना केन सुकृतफलेन विधात्रा घटिता रमणी ॥ (C)

१९७। सरभमुदाहरति तरलेति। तरल कमलदल सरि जुअ णअणा — तरलकमलदलसदृशनयनयुगा, सरअ समअ ससि सु(सु) सरिसबअणा — शरत्समयशशिसुसदृशवदना। मअ गल करिवर

---

१९७ १ स्तुसरिस (E) २ बिअणा (B) ३ गल (A) गल (B) कल (F) ४ सुकिअ (E) ५ विह (A & B) ६ गढु (A B & C) ७ १९९ (A) ८ सरभ (C)

णरेंद[1] जत्थ[2] सव्वलो सुपस चक्क दीसए
पइक्क[3] ठाम पंचमे पआ चऊ सवीसए[4] ।
पलंत[5] हार[6] चारु सारु[7] अंत जस्स वट्टए[8]
पसिद्ध ए णराउ[9] जंप गंध वंधु[10] अट्ठए[11] ॥ १६८[12] ॥

---

मअलस गमणी — मदकलकरिवरसालसगमना एतादृशी रमणी कमण सू[सु]किअ फल — केन सुकृतफलेन विहि — विधिना स्रष्टेति यावत् गठ — निर्मिता ॥ सरभो निवृत्तः । (E).

१६७ । यथा । तरलकमलदलसदृशयुगनयना शरत्समयशशि-सुसदृशवदना । मदकलकरिवरसालसगमना केन सुकृतफलेन विधिना निर्मिता रमणी ॥ (G).

१६८ । अथ षोडशाक्षरा । नरेन्द्रो यत्र सबलः सुपर्णश्चक्रं दृश्यते पदातिकः स्थाने पञ्चमे पदे चतुर्विंशतिः । पतनहारश्चारुः सारः अन्ते यस्य वर्त्तते * * नाराचो जल्पतां गन्धा वध्यन्तेऽष्टौ ॥ प्राथमिकत्वात् सबलो नरेन्द्रो जगणः, सुपर्णो रगणः, चक्रमित्यनेनाप्येतद्गणद्वयं लभ्यते, पदातिको जगणः, पादे चतुर्विंशतिर्मात्राः भवन्ति, यस्यान्ते पतनहारो दृश्यते तत्र गन्धा लघवोऽष्टौ निव-

---

१६८ । १ णरिंद (E & F). २ जच्छ (A). ३ ठइक (B). ४ चक्क चौसए (C), चउ सवीसए (E & F). ५ पलंति (A). ६ हाव (A & C). ७ सार (E & F). ८ वड्डए (A), वट्टए (C). ९ णराच (B), णराचु (C), णराज (E). १० वट्ट (B), वद्द (C), वंक (E). ११ चट्टए (B). १२ १६४ (A).

ध्यन्तोऽर्थाहुरवोऽष्टौ । यद्य[प्य]ष्टाक्षरप्रकरणे पमाणि इत्यग्र किञ्चिद् इत्युक्त [V de चीक (= p 380] तथापि प्रकरणानुरोधात् तदनुवाद कृत इति मन्तव्यम् । (C)

१६८ । अथ षोडशाक्षरचरणस्य वृत्तस्य षट्त्रिंशदुत्तरपञ्चशताधिकपञ्चषष्टिसहस्र [६५५३६] भेदा भवन्ति, तत्र षट्चत्वारिंशदुत्तरा[ष्टशता]धिकैकविंशतिसहस्रतम [२१८४६] भेद नाराचनामक वृत्त लक्षयति, णरिंदेति । जत्थ — यत्र सम्वलो — सबल णरिंद — नरेंद्र मध्यगुरुर्जगण इति यावत् सुपण्ण चक्क — सुपर्णचक्रम् अत — अन्ते पादान्ते चारु सुंदर भार पादपूरकत्वात् श्रेष्ठ इति हार — हार गुरु बट्टए — वर्त्तते, यत्र च पअ — पादे चउवीसए — चतुर्विंशति मात्रा इति शेष, * * * मध्यलघुरगणश्चेति यावत् दीसए — दृश्यते पचमे ठाम — पञ्चमे स्थाने पइक्क — पदाति मध्यगुरुर्जगण इति यावत् दृश्यते इति पूर्वेणान्वय, जस्स — यस्य अट्ठए — अष्टौ गध — गधा लघव इति यावत् वक — वक्रा गुरवश्चेत्यर्थं पलत — पतति पसिद्ध — प्रसिद्ध ए — एष णराउ — नाराच जप — जल्पत ॥ ~~इत्यत्र~~ तस्स — पञ्चमस्थाने पदातिर्दृश्यत इत्युक्त्या तृतीयचतुर्थस्थाने पुनरपि जगणरगणावेव देयाविति लभ्यते, अन्यथा प्रथमद्वितीय स्थाने जगणरगणयो पञ्चमस्थाने पदातेरेवदानस्योक्तत्वात् तृतीय चतुर्थस्थाने को गणो देय इत्याकांक्षाया अनिवृत्त्यापत्ति तथाच जगण रगण जगण रगण जगण गुरुरचितचरण नाराच इति फलितार्थ । यद्यपि अष्टोत्तर[ष्टाक्षर]प्रस्तारे पमाणि इत्यनेन प्रागेव ... ...णि प्रकरणानुरोधात्पुनैव पुनरनुवाद कृत इत्यव-

जहा, चलंत[1] जोह मत्त[2] कोह[3] रण[4] कम्म अग्गरा
किवाण वाण सल्ल[5] भल्ल[6] चाव[7] चक्क मुग्गरा[8] ।
पहार वार[9] धीर[10] वीर[11] वग्ग[12] मज्झ[13] पंडिआ
पअट्ठ[14] ओट्ठ[15] कंत दंत[16] तेण सेण मंडिआ[17] ॥
१९९[18] ॥ णराच[19] ।

त्तातचरणोपदेशसरणिः । अत्र मात्राकथनं पृथक्[या] गुरुलघुकथनं च पद्यपूरणार्थमिति ध्येयम् । (E).

१९८ । अथ षोडशाक्षराष्टी ॥ णरिंदेति । नरेंद्रो यत्र सदलः सुपर्णचक्रं दृश्यते, पदातिः स्थाने पंचमे, पादे चतुर्विंशतिर्मात्रा-इत्यर्थः । प्रकटो हारस्थारुः सारोऽन्ते यस्य वर्त्तते प्रसिद्धं तन्नाराचं जल्पति गंधा वक्रा अष्टौ ॥ नरेंद्रो जगणः, सुपर्णो रगणः, पदाति-र्जगणः । पंचमे स्थाने इत्युक्त्या तृतीयचतुर्थस्थाने जगणरगणावेव पुनर्देयौ इति सूच्यते । गंधा लघवो वक्रा गुरवः । (G).

१९९ । उदाहरति । चलन्ति योधाः शत्रून् क्षोभयन्तः वर्मकर्मण्युग्राः, कृपाणबाणचापशल्यभल्लमुद्गरैः । प्रहारवारिणधा रणे

१९९ । १ चलंति (B). २ मत्तु (A, B & C). ३ कोह (A, B & C). ४ रम्म (A, B & C). ५ सेल्ल (A, B & C). ६ भेल्ल (B & C). ७ चाप (A). ८ मुग्गरा (B). ९ धार (A), वारि (B & C). १० बार (A), मार (B), धार (C). ११ मार (A), धारि (B), धीरि (C). १२ रग्ग (A). १३ वग्ग (A, B & C), मज्झ (F). १४ पउठ्ठ (A), पच्चोट्ठ (B), पच्चट्ठ (C), पदट्ठ (F). १५ उट्ठ (A). १६ कन्त दन्त (A), दन्त कन्त (B). १७ सुपिडिआ (B),

ध्यम्नोऽर्पाहुरवोऽष्टौ । यद्य[पि]ष्टाचरप्रकरणे पचापि इत्य किञ्चा इत्युक्तं [১।১০ पौष १८ p. ३८६] तथापि प्रकरणानुरोधात् तदनुवाद इत इति मन्तव्यम् । (६)

१६८ । अथ षोडशाचरचरणस्य वृत्तस्य षट्षष्टिसहस्रपञ्चशताधिकपञ्चषष्टिमहस्र [६५५३६] भेदा भवन्ति, तत्र षट्चत्वारिंशोत्तरा[ष्टशता]धिकैकविंशतिसहस्रतम [२१८४६] भेद नाराचनामक वृत्तं लक्षयति, णरिंदेति । जत्थ — यत्र मभ्यसो — मध्यस्य णरिंद — नरेंद्र मध्यगुरुजगण इति यावत् सुपल चक्क — सुपर्णचक्रम् अंत — अंते पादान्ते चाह सुदर भार पादपूरकत्वात् श्रेष्ठ इति हार — हार गुरु अट्ठए — वर्त्तते, यत्र च पन्ना — पादे चउबीसए — चतुर्विंशति मात्रा इति शेष, * * * मध्यम्लघुरगणश्चेति यावत् दीसए — दृश्यते पचमे ठाम — पचमे स्थाने पइक्क — पदाति मध्यगुरुजगण इति यावत् दृश्यते इति पूर्वेणान्वय, जस्स — यस्य अट्ठए — अष्टौ गध — गधा लघव इति यावत् वक्क — वक्रा गुरवश्चेत्यर्थ पलत — पतति पसिद्ध — प्रसिद्ध ए — एष णराउ — नाराच जप — जल्पत ॥ इहाप्यत्र तत्त्व — पचमस्थाने पदातिर्दृश्यत इत्युक्त्या तृतीयचतुर्थस्थाने पुनरपि जगणरगणावेव देयाविति लभ्यते, अन्यथा प्रथमद्वितीयस्थाने जगणरगणयो पचमस्थाने पदातेरेवदानस्योक्तत्वात् तृतीय चतुर्थस्थाने कौ गणौ देय इत्याकाङ्क्षाया अनिष्टत्वापत्ति, तथाच जगण रगण जगण रगण जगण गुरुरचितचरण नाराच इति फलितार्थ । यद्यपि अष्टोत्तर[ष्टाचर]प्रस्तारे पमाणि इत्यनेन प्रागेवै तल्लक्षित, तथापि प्रकरणानुरोधात्तस्यैव पुनरनुवाद कृत इत्यव-

जहा, चलंत[1] जोह मत्त[2] कोह[3] रण[4] कम्म अग्गरा
किवाण बाण सल्ल[5] भल्ल[6] चाव[7] चक्क मुग्गरा[8] ।
पहार वार[9] धीर[10] वीर[11] वग्ग[12] मज्झ[13] पंडिआ
पअट्ठ[14] ओट्ठ[15] कंत दंत[16] तेण सेण मंडिआ[17] ॥
१९९[18] ॥ णराच[19] ।

---

त्तातचरणोपदेशसरणिः । अत्र मात्राकथनं पृथक्[था] गुरुलघुकथनं च पद्यपूरणार्थमिति ध्येयम् । (E).

१९८ । अथ षोडशाक्षराष्टौ ॥ णरिंदेति । नरेंद्रो यत्र सदलः सुपर्णचक्रं दृश्यते, पदातिः स्थाने पंचमे, पादे चतुर्विंशतिर्मात्रा इत्यर्थः । प्रकटो हारस्तारः सारोऽन्ते यस्य वर्त्तते प्रसिद्धं तन्नाराचं जल्पति गंधा वक्रा अष्टौ ॥ नरेंद्रो जगणः, सुपर्णो रगणः, पदातिर्जगणः । पंचमे स्थाने इत्युक्त्या तृतीयचतुर्थस्थाने जगणरगणावेव पुनर्देयौ इति सूच्यते । गंधा लघवो वक्रा गुरवः । (G).

१९९ । उदाहरति । चलन्ति योधाः शत्रून् क्षोभयन्तः वर्म्मकर्म्मण्युग्राः, कृपाणबाणचापशल्यभल्लमुद्गरैः । प्रहारवारिवधा रणे

---

१९९ । १ चलंति (B). २ मत्तु (A, B & C). ३ खोह (A, B & C). ४ वम्म (A, B & C). ५ सेल (A, B & C). ६ भेल (B & C). ७ चाप (A). ८ मुग्गरा (B). ९ धार (A), वारि (B & C). १० वार (A), मार (B), धार (C). ११ मार (A), धारि (B), धीरि (C). १२ रग्ग (A). १३ वग्ग (A, B & C), मज्झ (F). १४ पउठ्ठ (A), पच्चोट्ठ (B), पचट्ठ (C), पदट्ठ (F). १५ उठ्ठ (A). १६ दन्त दन्त (A), दन्त कन्त (B). १७ मुण्डिआ (B), खण्डिआ (C). १८ १९४ (A). १९ नाराच (A).

लीन विसेस[1] विश्वागद्दु[2] मत्तह[3] चाहसही[4]
पंचउ भग्गण[5] पाश्च[6] पश्चासिश्च हरिसही।
श्चंत ठिश्चा जहि[7] हार मुणिज्जइ हे रमणी
चावण[8] श्चग्गल तिण्णि सश्चा धुश्च[9] मत्त मुणी[10] ॥१७०[11]।

धीरा वर्गे वर्गे पण्डिता प्रदग्धे श्रोह दन्तालेन सेन सेना खण्डिता ॥ वर्गं कवच, कृपाणादिभि गधून् चोभयन्त इत्यथ धार धार इति पाठे पुन पुनरित्यर्थः। वर्गे वर्गे सेनायां सेनायां ते प्रबन्ध केचिन्मुखेन खण्डिता। (C)

१६८। नाराचमुदाहरति, चलन्तेति। किमाण बाण सञ्ज भञ्च चाब चक्क मुग्गरा—कृपाणबाणप्रकभल्लचापचक्रमुद्गरै रच कम्म श्चग्गरा—रणकर्मदक्षा दृशा इति यावत् मत्त कोह—क्रोधमत्ता पहार धार धीर—प्रहारवारणधीरा शत्रुकृतशस्त्रप्रहाररक्षे कृतधैर्या इति यावत् वीर वग्ग मज्झ—वीरवर्गमध्ये पण्डिश्चा—पण्डिता कृतशस्त्रविद्याध्ययना इत्यर्थ पश्चट्ठ श्रोट्ठ कंत दंत—प्रदष्टौष्ठकान्तदन्ता प्रदष्ट श्रोठो येषां दृशा कांता दन्ता येषां ते तादृशा इत्यर्थ जोह—योद्धार चलंति, तेन योधचलनेन सेण—सेना खण्डिश्चा—खण्डिता ॥ नाराचो निवृत्त। (F)

१६८। यथा। चलन्ति योधा मत्तकोपा रणकर्माधिका कृपाण

१७०। १ लीन विसेसे (D) लील सरस (F) लीलसरस (F) २ विश्वागह (E & F) ३ मत्तइ (B & C) ४ रेविणवी (A) चारसहि (B) ५ मत्त (C) ६ भाव (B) ७ जह (A) जइ (C) ८ चामथ (A) चावण (B & C) ९ धुन (E & F) १० मुनी (A) कनी (B & C) ११ १६६ (A)

वाणशल्यभङ्गचापचक्रमुद्गरैः। प्रहारवारणधीराः वीरवर्गमध्ये पंडिताः प्रदष्टौष्ठकांतदंतालेन सेना मंडिता ॥ (G).

१७०। नीले विशेषो ज्ञायतां मात्रा द्वाविंशतिः पञ्चभिर्भगणैः पादे प्रकाशितम् एतादृशं स्वरूपम्। अन्तस्थो यदि हारो जायते हे रमणि द्विपञ्चाशदग्राणि त्रीणि शतानि ध्रुवं मात्रा भवन्ति॥ नीले छन्दसि, नीला इत्यन्ये, लीलाविलास इत्यन्ये। (C).

१७०। अथ षोडशाक्षरचरणवृत्तस्य सप्ताशीत्युत्तर-सप्तशताधिक-सप्तविंशति २७७८७ [अष्टाविंशति २८०८७] सहस्रतमं भेदं नील-नामकं वृत्तं लक्षयति, णीलेति। हे रमणि प्रिये जहि—यत्र येषां वा अंत—अंते हार—हारो गुरुरिति यावत् ठिआ—स्थितः मुणिज्जइ—ज्ञायते एरिसही—एतादृशैः पंचउ भगण—पंचभगणैरादिगुरुकैर्गणैरिति यावत् पाउ[अ] पआसिअ—पादे प्रकाशितं प्रकाशि[त]पादं वा, अवहट्टभाषायां पूर्वनिपातानियमात् बाइसही—द्वाविंशत्या मत्तह—मात्राभिः उपलक्षितं णील-सरूअ—नीलस्वरूपं नीलनामकस्य छंदसः स्वरूपमिति यावत् विआणह—विज्ञायताम्, अत्र च बावण अग्गल—द्विपंचाशदधि-कानि तिण्णि सआ—त्रीणि शतानि मत्त—मात्राः धुअ—ध्रुवं निश्चितमित्यर्थः मुणी—ज्ञायतां॥ इदं च चतुःछंदःकरणाभि-प्रायेणेति बोध्यं। (E).

१७०। णीलेति। नीलस्वरूपं विजानीत मात्रा द्वाविंशतिः पंच भगणाः पादे प्रकाशिताः एतादृशाः अंते स्थितो यत्र हारो-ज्ञायते हे रमणि द्विपंचाशदधिकानि त्रीणि शतानि ध्रुवं मात्राः

जहा, सज्जिअ जोह विवट्ठिअ[1] कोह चलाउ[2] धणू[3]
पक्खर[4] वाह[5] चलू[6] रणणाह[7] फुरंत[8] तणू।
पत्ति चलंत[9] करे धरि कुंत सुखग्गकरा
कण्ण णरेंद सुसज्जिअ बिंद चलंति[10] धरा॥
१७१[11]॥ णील।

---

ज्ञायते॥ नीलनामच्छन्द, हारो गुरु, मात्रोक्ति षोडशचरणाभिप्रायेण। (G)

१७१। उदाहरति। सज्जिता योधा विवर्द्धितक्रोधाश्चालयन्तो धनूंषि कवचवाहैश्चलितो नरनाथः स्फुरत्तनु। पत्तयश्चलन्ति करे धृत्वा कुन्तान् सुखड्गकराः कर्णनरेन्द्रे सुसज्जितवृन्दे चलति धरा॥ कवचयुक्ता वाहा यथा कवचवाहाः, एवक्रमेण कर्णनरेन्द्रे चलति सति। (C)

१७१। नीलमुदाहरति, सज्जिअ इति। विवट्ठिअ कोह—विवर्द्धितक्रोधा धणू—धनूंषि चलाउ—चालयत धनुर्भ्यो बाणान् क्षिपत इति भाव जोह—योधा सज्जिता सन्नद्धाश्च जाता, फुरत तणू—स्फुरत्तनु रणणाह—रणनाथ सेनापतिरित्यर्थ पक्खर वाह—कवचितायेन चलित, करे पाणौ कुन्तान् प्रासान्

---

१७१। १ विवड्ढिअ (B & C) २ चलाइ (F) ३ धुणु (D) ४ पक्खर (A) पक्खरि (B & C) ५ भाव (A) ६ चल (L) ७ वरवाह (A B & C) ८ फकुर (B & C) ९ चलत (A) १० धुणू (A) ११ चलत (E & F) १२ ११० (A)

दिज्जिए[1] सुपख आइ एक तो पओहराइ[2]
हिसि[3] रूअ[4] पंच चक्क सव्वलो मणोहराइ ।
अंत दिज्ज[5] गंध[6] वंधु[7] अक्खराइ सोलहाइ[8]
चंचला विणिमिआ फणिंद एउ[9] वल्लहाइ[10] ॥ १७२[11] ॥

---

धरि—धृत्वा सुखग्गकरा—सत्खड्गकराः पत्ति—पत्तयः चलंत—चलिताः, एवंक्रमेण कण णरेंद—कर्णनरेंद्रे सुसज्जितवृंदे सति धरा पृथ्वी चलंत—चलति ॥ नीलो निवृत्तः । (E).

१७१ । यथा । सज्जिता योधा विवर्द्धितकोपाश्चालयंतो धनूंषि पखरवाहे चलन् रणनाथः स्फुरत्तनुः । पत्तयश्चलिताः करे धृत्वा कुंतान् सुखड्गकराः कर्णनरेंद्रे सुसज्जितवृंदे चलति धरा ॥ (G).

१७२ । दीयते सुपर्ण आदौ एकस्ततः पयोधरो भवति एवं रूपेण पञ्चचक्रं सकलं मनोहरम् । अन्ते दीयते गन्धो वन्धुः अचरैः षोडशभिश्चञ्चला विनिर्म्मिता फणीन्द्रेण वल्लभा ॥ सुपर्णो रगणः, पयोधरो जगणः, गन्धो लघुः स एव वन्धुः निर्व्वाहकत्वात् । (C).

१७२ । अथ षोडशाचरचरणस्य वृत्तस्यैकनवत्युत्तरपट्शताधिकत्रिचत्वारिंशत्सहस्रतमं ४३६९१ भेदं चंचलानामकं वृत्तं लचयति, दिज्जिए इति । यत्र आइ—आदौ सुपण—सुपर्णः मध्यलघुः

---

१७२ । १ दिज्जिया (A, B & C). २ पयोधराइ (B), पयोहराहि (E). ३ कहिस (A), हेस (B & C). ४ रूप (B). ५ किज्ज (A). ६ गन्ध (B), गंध (F). ७ वंध (A & B). ८ सोरहाइं (A). सोलहाइ (B & C). ९ एड (A). १० दुल्लहाइँ (A), दुल्लभाए (B). ११ १६८ (A).

जहा[1], कस पत्थ[2] ढुक्कु[3] लुक्कु[4] सूर बाण संहरण[5]
घाउ[6] जासु[7] तासु[8] लग्गु[9] अंधआर सहरण[10]।
एत्थ[11] पत्थ[12] सट्ठि[13] बाण कण[14] पुरि[15] छड्डुरण[16]
पेक्खि[17] कण कित्ति धण बाण सब्ब कड्ढिरण[18]॥
१७३[19] ॥ चचला[20]

रगण इत्यर्थ दिज्जिए—दीयते तो—तत एक—एक पश्रो
हराइ—पयोधर मध्यगुरुर्जगण इति यावत् दीयते इत्यनेन
पूर्वेणान्वय, दिज्जि रूश्र—अनेन रूपेण मणोहराइ—मनोहराणि
सब्बलो—सबलानि पच चक्क—चक्राणि गणा इत्यर्थ क्रियत
इति शेष । अत्र चक्रशब्दो गणवाची, तथाच रगण जगण रगण
अनेन रूपेण पञ्चगणा कर्त्तव्या इत्यर्थ । अत—अन्ते पदाते गण-
पञ्चकान्ते वा बधु—बधु निर्वाहकत्वात् गध लघुरिति यावत्
दिज्ज—दीयते, यत्र च षोलहाइ अक्खराइ—षोडश अक्षराणि
पादे पततीति शेष, फणिंद—फणीन्द्रेण पिङ्गलेनेति यावत्

१७३ । १ यथा (F) २ पच्छ (A) ३ ढुक्क (A) ढुक्कु (F) ४ लुक्क (B)
५ सहरण (A) ६ घाव (A) ७ जासु (A B & C) ८ तासु (A & B
dropt in (C & F) ९ लग्ग (A & F) लग्गु (B & C) १० सहरण (A
B & C) ११ पथ (A) एक (F) १२ पच्छ (A) पत्थि (F) १३ साहि
(A & B) साठि (C) सट्ठि (F) १४ काण (B & C) १५ पुरि (F)
१६ कड्डण (B & C) १७ पेक्ख (A) १८ कड्डुरण (A) कठ्ठिरण (F)
१९ १९९ (A) २० चञ्चला (C)

विणिम्मिश्रा — विनिर्मिता वल्लहाद् — वल्लभा पिंगलस्येति भावः, एउ — एषा चंचला — तच्चंचलानामकं वृत्तमित्यर्थः ॥ (E).

१७२। दिज्जीति। दीयते सुपर्ण आदौ एकस्ततः पयोधरः एवंरूपेण पंचचक्राणि सवल्लानि मनोहराणि। अन्ते दीयते गंधोबंधुः सुंदरः अक्षराणि षोडश चंचला विनिर्मिता फणीन्द्रेण वल्लभा॥ सुपर्णो रगणः, पयोधरो जगणः, एवंरूपेण रगण-जगण-रगण-जगण-रगणा इत्यर्थः, गंधो लघुः, चंचलानामकं छंदः। (G).

१७३। उदाहरति। कर्णपार्थाभ्यां मिलितं लुप्तं शूराणां बाणसंघैर्घाता जातास्तत्र लग्नमन्धकारसंशयेन। अथ पार्थेन षष्टि-बाणान् कर्णपूरितान् दृष्ट्वा कर्णेन कीर्त्तिधन्येन बाणाः सर्व्वे छत्ताः॥ लुप्तं लज्जया लग्नम्, अत्रास्मिन् एव समये * * *। (C).

१७३। चंचलामुदाहरति। कण्ण पत्थ — कर्णपार्थौ राधेय-फाल्गुनाविति यावत् ढुक्कु — युद्धार्थं मिलितौ, बाण संहण्ण — बाणसंघेन सूर — सूर्यः लुक्कु — निलीनः, जासु — यस्य घाउ — घातः प्रहारनिपातजात इति शेषः तासु — तस्य अंधआर संहण्ण — अंधकारसंघेन लग्गु — लग्नं यस्य चतं जातं सः अंधकारजालप्रविष्ट-इव जात इति भावः, एत्थ — एतस्मिन्नवसरे इत्यर्थः कण्ण पूरि — कर्णं पूरयित्वा आकर्णपर्यन्तमाकृष्येति यावत् पत्थ — पार्थेन छड्डु-एण — मुक्तान् सट्ठि बाण — षष्टिबाणान् पेक्खि — प्रेक्ष्य कित्ति धण्ण — कीर्त्तिधनेन कण्ण — कर्णेन सव्व बाण — सर्व्वे बाणाः कट्टिएण — कर्त्तिताः॥ चंचला निवृत्ता। (E).

१७२। यथा। कर्णपार्थौ मिलितौ निलीनः सूर्यो बाणसंघ-

जो लोआणं[1] वट्टे[2] बिंबुट्ठे[3] विज्जुट्ठे[4] णास[5] ट्ठाणो[6]
सुज्झाणो[7] णाओ[8] छंदुट्ठावे[9] कण्णट्ठे हंसट्ठाणो[10] ।
छंदु ग्गाअंतो[11] वुत्तो[12] कंतो[13] सब्वे सो[14] सम्माणीओ
बह्माणं[15] रूअं[16] छंदो एसो लोआणं[17] बक्खाणीओ[18] ॥
१७४[19] ॥

---

केन घातो येषु तेषु लग्नमधकारसघेन ॥ अत्र पार्थेन पट्टिर्वाणा कर्णोपरि त्यक्ता, तान् प्रेक्ष्य कर्णेन कीर्त्तिधनेन वाणा सर्वे कर्त्तिता ॥ (G)

१७४ । यो लोकानां वर्त्तते विम्बोष्ठे विद्युद्दृष्टि हंसस्येव स्थान यस्य सज्ञो नाग कर्णमूलमुत्थापयति, कर्णा अष्टौ, भारतेन युक्त। छन्दो गायन् कान्तवृत्त सर्व्वैं समानित ब्रह्मरूपक छन्दएतल्लोकैर्व्याख्यात ॥ विद्युन्मालेवार्द्धं यस्य तद्विद्युन्मालार्द्ध विद्युद्दृष्टि ], हंसस्थानमित्यनेन हंसवन्मन्थरगतित्व बोध्यते। कर्णा द्विगुरुगणा, तैरष्टाभिरिद छन्दो लभ्यते, छन्द उत्थापयति सज्ञ नाग पिंगल छन्दो गायन् ब्रह्मणो रूपकमित्यनेन ब्रह्मरूपक नाम छन्दो लक्षणीय।(C)

---

१७४। १ हे चाणं (B) २ वट्टे (B & C) ३ बिम्बुट्ठ (B & C) ४ विज्जुट्ठे (A) dropt in (B) ५ णस (A B & C) ६ ट्ठाणो (B & C) ट्ठाणो (E) ७ सुज्झणो (C) ८ णाणो (A & C , dropt in (B) ९ छंदुट्ठावे (A, B & C) १० हंसट्ठाणो (A & C) हाससाणो (B) ११ छंदु ग्गाअंतो (E & F) १२ and १३ transposed in (B & C) १४ Dropt in (A & F) १४ सव्व सोहु (A), सव्वं सोच (B & C) १५ बम्भाणो (A) बम्हाणो (B) बह्माणो (C) बम्हाण (F) १६ रूअो (A B & C) रूवं (F) १७ लोअर्णं (F) १८ बक्खाणिओ (F) १९ १७० (A).

जहा,

उम्मत्ता[1] जोहा उट्ठे[2] कोहा ओत्था[3] ओत्थी[4] जुज्झंता[5]
णेणक्का रंभा णाहं[6] दंभा अप्पा अप्पी वुज्झंता[7] ।
धावंता[8] सल्ला[9] छिण्णो[10] कांठा मत्था[11] पिट्ठी पेरंता[12]
णं सग्गा मग्गा जाए अग्गा लुद्धा[13] उद्धा हेरंता ॥
१७५[14] ॥ ब्रह्मरूपकं।

---

१७४ । अथ षोडशाक्षरचरणवृत्तस्य प्रथमं भेदं ब्रह्मरूपकनाम वृत्तं लक्षयति, जो लोआणमिति । जो — यत् लोआणं — लोकानां विंवुट्ठे — विंबोष्ठे विज्जुट्ठे — विद्युत्स्थाने विद्युत्साम्यतया विद्युत्पदेन दंता लक्ष्यंते, तथाच दंतस्था[न] इत्यर्थः, णास ट्ठाणे — नासिकास्थाने वट्टे — वर्त्तते, यच्च वुत्तो — वृत्तं छंद् गाअंतो — छन्दोगायद्भिः सव्वे — सर्व्वैः संमाणीओ — संमानितं, सो — तत् कंतो — कांतं हंस ट्ठाणो — हंसस्थानं हंसस्येव स्थानं स्थितिर्गतिर्यस्य तत्तादृशमित्यर्थः वह्माणं रूपकं छंदो — [ब्रह्मरूपकं] छंदः कण्ठे — कर्णाष्टकेन गुरुद्वयात्मकगणाष्टकेन सुज्जाणो णाओ — सुज्ञानो नागः पिंगलः उट्ठावे — उत्थापयति, एसो — तत् छंदो — छंदः

---

१७५ । १ उम्मता (B). २ उठे (E). ३ ओच्छा (A), ओथा (F). ४ ओच्छी (A), ओत्त्थी (F). ५ जुझ्झंता (A & E). ६ लाहे (A), णाहे (B & C). ७ वुझ्झंता (A & E), dropt in (B). ८ भल्ला (B), भल्ल का (C). ९ कंठा (A). १० छिण्णे (A), छिन्ने (E). ११ मच्छा (A), मत्थ (E). १२ परंता (A) १३ लब्धा (B), उद्धा (C) १४ १७१ (A).

क्रोधाय—लोकाना निकटे मयेति मेव मक्ताक्रोधो—व्याख्यातम्॥ अथ योडशगुरुरचितचरणं मद्भरूपकनामकं छन्दमिति वर्णितार्थः। (F)

१०४। जो सो इति। यो लोकानां वर्तते त्रिवोडि विमुष्टे भाषाभ्याने मुख्यानो भाग छदोदर्यो कर्णाष्टकेन इसस्थाने। इदो गायद्भिरुक्तं कार्त सर्वे मधमानित मद्भरूप छद एतत् लोकानां ख्यात॥ कर्णा द्विगुरु, इसस्थाने षट्। (G)

१०५। उदाहरति। उन्मत्ता योधा उत्थितकोपा उत्थायोत्थाय युद्धमाना मेनकारम्भामाय इभादात्मान बुध्यमाना। धावन्त प्रच्छिन्नकण्ठा मस्तक पृष्ठे प्रेरयन्तो नून स्वर्गमार्गे यातुमूर्द्ध्वोर्द्ध्वं पश्यति॥ अत्र मेनकानाय अत्र रम्भानाय इत्येव मात्मान बुध्यमाना छिन्न धमस्तक तत् पृष्ठे प्रेरयन्तो नून स्वर्गमार्गे यातुमपे ऊर्द्ध्वोर्द्ध्वं पश्यन्ति इत्युत्प्रेक्षा। (C)

१०५। मद्भरूपकमुदाहरति, उमत्तेति। उठे कोहा—उत्थित क्रोधा उमत्ता—उन्मत्ताः अप्पा अप्पी—आत्मानमात्मान परस्परमित्यर्थः मेणक्का रंभा णाह—मेनकारभामाय दंभा—दभात् बुझ्झन्ता—बुध्यमाना धावन्ता कमा छिले ले] कठा—धावन्त प्रच्छिन्नकठा मत्था पिट्ठी पेरन्ता—मस्तकानि पृष्ठे पातयन्त ओत्थ्या ओत्थी—उत्थायोत्थाय जुझ्झन्ता—युध्यमाना ण सग्गा मग्गा जाए—ननु निश्चयेनेत्यर्थः स्वर्गमार्गे गच्छन्त लुद्धा—लुब्धा मेनकादिप्राप्त्यर्थमिति भाव जोहा—योद्धार अग्गा—अग्रे उड्ढा उड्ढे हेरन्ता—अन्विष्यन्ति मेनकादिसुखमित्यर्थः॥ (E)

पओहर मुह दंठिआ[1] तहअ[2] हत्थ[3] एक्को[4] दिआ
पुणोवि[5] तह[6] संठिआ[7] तहअ[8] गंध सज्जा[9] किआ[10] ।
पलंति[11] वलआ जुआ[12] विमल सद्द हारा उणो
चउग्गलअ[13] वीसआ पुहवि णाम छंदो[14] मुणो[15] ॥
१७६[16] ॥

---

१७५। यथा। उन्मत्ता योधा उत्थितकोपा उत्थायोत्थाय युध्यंतो[ध्यमाना] मेनकारंभानायदंभात् परस्परं वुध्यंतः[ध्यमाना]: । धावन्तः शस्त्रच्छिन्नकंठा मस्तकानि पृष्ठे पातयंतो नूनं स्वर्गमनसो- यांतोऽग्रे लुब्धा ऊर्द्धमन्वेषयंतः ॥ (G).

१७६। अथ मन्नद्गाचरा। पयोधरो मुखे स्थितस्तथाच हस्त- एकः स्थितः पुनरपि तथा संस्थितौ तथाच गन्धः सज्जीकृतः। पतति वलययुगं विमलशब्दहारौ पुनश्चतुरश्चविंशतिर्मात्राः पृथ्वीनाम छन्दो भणामि ॥ मुखे आदौ, ततः पतति वलययुगं पादे चतु- र्विंशतिर्मात्रा भवन्ति यत्र तत्। पयोधरो जगणः, हस्तोऽन्तगुरु- चतुष्कलः, गन्धो लघुः, वलयो गुरुः। (C).

---

१०९। १ ठ्ठिआ (B & C). २ तहवि (A). ३ हच्छ (A). ४ एक्का (E & F). ५ पुणोपि (F). ६ त (F). ७ संठ्ठिआ (B), संठ्ठिआ (E). ८ तहवि (B & C). ९ एक्को (A), सेज्जो (B), सज्जे (C). १० दिआ (B & C). ११ पलंत (A). १२ वलअच्छुआ (C). १३ चउकलअ (A), चउ- कलअ (B). १४ छंदा (B), छंद (C). १५ भणो (A), सुणो (B), भणो (C). १६ १७२ (A).

१७६ । अथ सप्तदशाक्षरचरणस्य वृत्तस्य द्विसप्तत्युत्तरैकविंशत्युत्तरैकलक्ष १३१०७२ भेदा भवन्ति, तत्र पञ्चाशदधिकसप्तशताधिकषट्[सप्त]विंशसहस्रतम [२८७५०] भेदं पृथ्वीनामकं वृत्तं कथयति, पओहरेति । यत्र मुह — मुखे आदाविति यावत् पओहर — पयोधरः मध्यगुरुर्जगण इति यावत् ठिआ — स्थित, तहअ — तथाच एक्क — एक हत्थ — हस्तो गुर्वन्त सगणइत्यर्थः दिआ — दत्त, पुणोवि — पुनरपि तह थठिआ — तथा सुस्थितौ पुनरपि ज[ग]णसगणौ कर्त्तव्यावित्यर्थः, तहअ — तथाच गंध — गंध लघु सज्जा किआ — सज्जीकृत । उणो — पुन वलअ जुआ विमल सद्द हारा — वलययुगविमलशब्दहारा वलयौ गुरुद्वय शब्दो लघु हारो गुरुरेते इत्यर्थ पलति — पतति, चउग्गलअ — चतुरधिक वीसआ — विंशतिर्मात्रा इति शेष पततीति पूर्वेणान्वय, तत् पुहवि णाम छंदो — पृथ्वीनामच्छन्द सुणो — श्रूयताम् ॥ अत्र मात्राकथन पादपूरणार्थमेव, जगण सगण-जगण सगण यगण लघु गुरुरचित पृथ्वीच्छन्द इति निष्कृष्टोऽर्थ । ।ऽ।, ।।ऽ, ।ऽ।, ।।ऽ ।ऽऽ, ।ऽ (E)

१७६ । अथ सप्तदशाक्षरायष्टी ॥ पओ इति । पयोधरो मुखे स्थितस्तथा हस्त एको देय पुनरपि तथा सुस्थितस्ततः गध सज्जीकृत । पतति वलययुग विमल शब्दहारौ पुनश्चतुरधिक विंशति पृथ्वीनामच्छन्दो जानीहि ॥ पयोधरो जगण, हस्त सगण, पुनरपि जगण सगणौ कार्यौ इत्यर्थ । गधो लघु, वलयो गुरु, शब्दो लघु, हारो गुरु । (G)

जहा,

झणझ्झणिअ[1] णेउरं[2] रणरणंत कांची[3] गुणं
सहास मुह पंकअं अगुरु धूम[4] धूपुज्जलं ।
जलंत मणि दीविअं[5] मअण केलि लीलासरं[6]
णिसामुह[7] मणोहरं जुअइ[8] मंदिरं राजते[9] ॥ १७७[10] ॥

पृथ्वी ।

---

१७७। उदाहरति । झणज्झणितनूपुरं रणरणत्काञ्चीगुणं सहासमुखपङ्कजम् अगुरुधूमधूपोज्ज्वलं । ज्वलन्मणिदीपकं मदन-केलिलीलासरः निशामुखमनोहरं युवतिमन्दिरं राजते ॥ अगुरु-धूम एव धूपः, सहासं मुखपङ्कजं यत्र अतएव लीलासरः । (C).

१७७। पृथ्वीमुदाहरति, झणझ्झणिअ इति । झणझ्झणिअ णेउरं—[झण]झणितनूपुरं झणझणेति रवं कुर्वन्नूपुराख्यं भूषणं यस्य तत्तादृशमित्यर्थः, रणरणंत कांची गुणं—अतिगंभीरशब्दाय-मानः काञ्चीगुणो यस्य तदित्यर्थः, सहास मुह पंकअं—सहासं मुखमेव पङ्कजं यस्य तत्तादृग्विधमित्यर्थः, अगुरु धूम धूपुज्जलं—अगुरुधूमधूपोज्ज्वलं । जलंत मणि दीवअं—ज्वलन्मणिदीपकं ज्वलद्दीप्यमानं भूपलमणिरेव दीपकं यत्र तादृशमित्यर्थः, मअण

---

१७७। १ झन्नझणिअ (B), झणझ्झणिअ (C), झणझणिअ (F). २ णूवरं (A, B & C). ३ कंची (A). ४ Dropt in (B). ५ दीपअं (A), दीवअं (B & C). ६ मअण कल्ल कीला सरं (A), मरण कोल कोसा (B), मअण कोलि कीला सरं (C). ७ Dropt in (B), णिसामुख (C). ८ जुवइ (B, C & F). ९ रेहइ (A), रेहए (B & C). १० १७३ (A).

[The foll w g form of ver 16 at n— मालाधरनामक छन्द is g en in MS (F — F1]

पढम दिअ विप्पआ तइअ' भूवई थप्पिआ
चरण गण तीअओ तहवि' भूवई दीअओ ।
चमर'जुअ अग्गला विमल गंध हारुज्जला
भणइ' फणि सेहरा' सुणहु छंद' मालाहरा ॥१०८'

केलि लीलाधर — मदनकेलिलीलाधर निवासगृह मनोहर — मध्य प्रादुर्भावातिरमणीयमित्यर्थ, युवति मंदिर — तरुणिमन्दिर राजते शोभते ॥ पृथ्वी निवृत्ता । (F)

१०७ । यथा । झणझणितनूपुर रणरणत्कांचीगुण मदाम मुखपकजम् अगुरुधूमधूपोज्ज्वल । ज्वलन्मणिदीपित मदनकेलि लीलाधरो निवास मनोहर युवतिमंदिरं राजते ॥ (G)

१०८ । प्रथम दीयता विप्रमथाच भूपति स्थाप्यतां चरणगणस्तृतीय तथाच भूपतिर्द्वीयते । चामरयुगाय विमलगन्धहारो ज्ज्वल भणति फणिशेखरो श्रूयतां मालाधर ॥ (C)

१०८ । पढेति ॥ प्रथमो देयो विप्रस्तत्र भूपति स्थापित चरणगणस्तृतीयस्तत्र भूपतिर्द्वस । चमरयुगाग्र विमलगंध हारोज्ज्वल भणति फणिशेखरो श्रूयतां छंदो मालाधरो ॥ विप्र श्चतुर्लघु, भूपतिर्जगण, चरणो भगण, चमरो गुरु, गंधो लघु, हारो गुरु । (G)

१०८। १ तहवि (B & C)   २ तइअ (F)   ३ चरम (C & F)
४ चमर (F)   ५ हारुला (A)   ६ सुणहु छन्द (C   ७ १०७ (A)

जहा, वहइ मलआणिला विरहि चेउ संतावणा[1]
रअइ[2] पिक पंचमा विअसु केसु फुल्ला वणा ।
तरुण[3] तरु पेल्लिआ[4] मअलु[5] माहवी वल्लिआ
वितर[6] सहि णेत्तआ समअ[7] माहवा[8] पत्तआ ॥
१७९[9] ॥ मालाधरः ।

---

१७९ । उदाहरति । वहति मलयानिलो विरहिचित्तसन्तापनो वदति पिकः पञ्चमं विकसितः किंशुकः फुल्लं वनं । तरुणतरौ प्रेरयति मुकुलं माधवी वल्ली विस्तारय सखि नेत्रे माधवसमयः प्रेक्ष्यतां ॥ (C).

१७९ । यथा । वहति मलयानिलो विरहिचेतःसंतापनो रवीति पिकः पंचमं विकसितं किंशुकपुष्पवनं ॥ तरुणतरुपल्लवा मुकुलिता माधवी वल्लिका विस्तारय सखि नेत्रे समयमाधवः प्राप्तः ॥ (G).

[शिखरिणी and मन्दाक्रान्ता are mentioned in MS. (H); but as they are not found in any of the others, they have been here left out.—Ed.]

---

१७९ । १ संतापणा (F). २ रपइ (B & C), रमइ (F). ३ तरुण (F). ४ पल्लवा (A). ५ मउलु (A), मउल (F). ६ विथर (F). ७ समर (C). ८ माधवा (F). ९ १७५ (A).

कुंतीपुत्ता तिण्णा दिण्णउ[1] मंथा सठवि[2] एक्का पाए
एक्का हारा[3] दुज्जे[4] कंकणु[5] गंधा सठवि जुग्गालाए[6] ।
चारी हारा[7] भव्वा कारउ[8] पाआ अंतहि सज्जीआए[9]
सप्पा राआ सुद्दा[10] काअउ जंपे[11] पिंगल[12] मंजीरा ए[13]
१८०[14]

---

१८० । अथाष्टादशाक्षरा यथा । कुन्तीपुत्रास्त्रयो दत्ता मस्तके स्थाप्यतामेक पादे हारस्तौ द्वे कङ्कणे * * ते युगले चत्वारो हारा भव्याकारा पादान्ते सज्जा आगता सर्पराज शुद्धाकारो जल्पति पिङ्गलो भणति * * ॥ कुन्तीपुत्र कर्णस्तेन द्विगुरुगण मस्तके आदौ, हस्तोऽन्तगुरुश्चतुष्कल, कङ्कण गुरुर्गन्धो लघुर्हारो गुरु । (C)

१८० । अथाष्टादशाक्षरचरणस्य वृत्तस्य चतुश्चत्वारिंशोत्तरैकशताधिकद्विषष्टिसहस्रोत्तरलक्षद्वय २६२१४४ भेदा भवन्ति, तत्र द्वि[त्रि]सप्तत्युत्तरषट्शताधिकद्वादशसहस्रतम १२६७३] भेदं मञ्जीरनामक वृत्तं लक्षयति, कुंतीपुत्तेति । यत्र यथा — मस्तके प्रथम-

---

१८० १ दिण्णइ (A) दिण्णा (B) २ मठइ (A) ३ हारा चक्का (A) हारा चक्का (B & C) चक्का हारा (E) ४ दिज्जे (A) ५ कणा (A) ६ जुग्गा पाए (A) जुग्गा जाए (B & C) जुग्ग जाए (E) ७ चारेउ (A). ८ भाआ कारउ (E) ९ सज्जीआए (A) सज्जीआए (B & C) सज्जीआए (E) १० सुद्द (B) ११ जम्प (B) १२ पिङ्गलु (C) १३ मजरीए (A & F) १४ १०९ (A)

मिति यावत् तिषा—त्रीन् कुंतीपुत्रान् गुरुद्वयात्मकान् गणानिति यावत् दिसउ—दत्वा एक्का—एकः पाए—पादः गुर्वादिभगणमि[द]त्यर्थः संठवि—संस्थाप्यते, ततश्च एक्का हारा—एको हारः गुरुः कंकण दुज्जे—कंकणद्वयं गुरुद्वयमिति यावत्, अवहट्टभाषायां पूर्वव्यत्यासदोषाभावात् दुज्जे इत्यस्य व्यत्यासे अपि न दोषः, गंधा—गंधस्य लघोरित्यर्थः जुगलाए—जुगलं संठवि—संस्थाप्यते। पाश्रा अंते [—पादांते] भव्वा कारउ—भव्याकाराः चारी हारा—चत्वारो हारा गुरवः सज्जीआए—सज्जिताः, ए—एतत् मंजीरा—मंजीरनामकं वृत्तमिति यावत्, इति सुद्धा काअउ—शुद्धकायः शुद्धो निष्कलंकः कायो यस्य स तादृश इत्यर्थः सप्पा राआ—सर्पराजः पिंगलः जंप—जल्पति ॥ (E).

१८०। अथाष्टादशाक्षरा धृतिः॥ कुंतीति। कुंतीपुत्रास्त्रयो-दत्ता मंथे संस्थाप्यते एकः पादः एको हारो द्विकंकणं गंधयोः संस्थाप्य युगलं॥ चत्वारो हारा भव्याकाराः पादांते सज्जिताः सर्पराजः शुद्धकायो जल्पति पिंगलो मंजीरं॥ कुंतीति द्विगुरुः, मंथे आदौ, पादो भगणः, हारो गुरुः, कंकणं गुरुः, गंधो लघुः। (G).

१८०। अष्टादशाक्षरप्रस्तारे कानिचिच्छन्दांस्याह। कुंतीपुत्ता इत्यादि। कुन्तीपुत्रान् त्रीन् दत्तान् मस्तके संस्थाप्य, एकः पादे हारः हस्तो द्विगुणः कंकणः, गन्धं संस्थापय युगं। तत्र चत्वारोहारा भव्याकाराः पादांते सज्जीभूताः सर्पराजः शुद्धकायोजल्पति पिंगलो मंजीरां॥ यत्र पादे मस्तके आदौ कुन्तीपुत्रान् कर्णगणान् गुरुयुग्मगणान् त्रीन् संस्थाप्य हारो गुरुर्हस्तः सगणः

जहा, गज्जे मेहा णीला कारउ[१] सद्दे मोरउ[२] उच्चा[३] रावा
ठामा[४] ठामा विज्जू रेहउ[५] पिंगा देहउ किज्जे[६] हारा।
फुल्ला णीवा पीवे[७] भम्मरु[८] दक्खा मारुअ[९] वीअंताए
हंहो[१०] हंजे काहा[११] किज्जउ[१२] आओ[१३] पाउस[१४] कील
ताए[१५] ॥ १८१[१६] ॥ मंजीरा।

---

ककणो द्विगुण ककणो गुरुस्तेन गुरुद्वय देय, गधयुग लघुद्वय मस्थाप्य चत्वारो हारा गुरव सम्मीभूता पादान्ते स्थिता, पिगल स्तत् छन्दो मजीरां जल्पति। अत्र नवसु नवसु वर्णेषु यति। उक्त छन्दःपारिजाते। मौ हावादौ सपच्चावथ भो म सोऽप्यथ म स्यादन्ते, माम्बिश्राम रन्ध्रे धारय भूयो रन्ध्र इदं भावन्त [?]। मजीरा तां नागेशा [?] सभ्यगवन्धमुदाराकारां, भावा वेदे [?] गन्नावथ मुचत्स्वादुस्थधाधारां [?] ॥ (H)

१८१। उदाहरति। गर्जन्ति मेघा नीलाकारा शब्दायन्ते मयूरा उच्चारावा, स्थाने स्थाने विद्युद्राजते पिङ्गलदेहे[हा] क्रियते हार। फुल्लेषु नीपेषु भ्रमरा पिबन्ति दक्षो मारुतो वीजयति हंहो हञ्ज किं क्रियताम् आगता प्राट्ट् क्रीडन्तौ॥ क्रियते

---

१८१। १ कारउ (A) २ मोरा (A, E & F) ३ चा (B) उचा (E) ४ ठामा (A). ५ रेहा (A) रेहइ (E & F) ६ किज्जइ (A), कीज्ज (E) ७ भम्मे (A) पिम्म (B & C) ८ भामर (A) ९ मारुअ (B) १० हो (B) ११ काम (A B & C) १२ किज्जाउ (B) १३ आवा (A) आओ (B & C) १४ पाउअ (E) १५ कीलणाए (A) १६ १७७ (A)

ज्ञायते, दचो मानभञ्जने दचिण इत्यर्थः, हंहो औत्सुक्ये, हञ्ज-इति चेटीसम्बोधनं। (C).

१८१। मंजीरमुदाहरति। [णीला कारउ—] नीलाकाराः मेहा—मेघाः गज्जे—गर्जंति उच्चा रावा—उच्चस्वराः मोरउ—मयूराः सद्दे—शब्दायंते, ठामा ठामा—स्थाने स्थाने पिंगा देहउ—पिंगदेहा पीतवर्णेति यावत् विज्जू—विद्युत् रेहइ—राजते हाराश्च किज्जे—क्रियंते मेघैरिति भावः। फुल्ला णीवा—पुष्पितान् नीपान् कदंवपुष्पाणि भम्मरु—भ्रमराः पीवे—पिवंति, दक्खा—दचः मानिनीमानभंजने इति भावः मारुश्र—मारुतः वीश्रंताए—वीजयति, हंहो हंजे—चेटिके काहा किज्जउ—किं क्रियतां किं विधीयतामिति यावत्, कीलंताए—क्रीडंती पाउस—प्रावृट् आओ—आगता॥ मानं त्यक्त्वा कांतमुपगच्छेति चेटी-मुखान्निष्कासयितुं कस्याश्चिन्मानिन्याः प्रावृडागमनात् किं विधी-यतामिति चेटीं प्रति वाक्यं। मंजीरो निवृत्तः। (E).

१८१। यथा। गर्जंति मेघाः नीलाकाराः, शब्दायंते मयूरा-उच्चारावाः, स्थाने स्थाने विद्युद्रेजते पिंगदेहा क्रियते हारः। फुल्लान्नीपान् पिवंति भ्रमरा दचो मारुतो वीजयति, हंहो हंजे किं क्रियताम् आगता प्रावृट् क्रीडंती॥ (G).

१८१। उदाहरणमाह, गज्जे मेहा इत्यादि। गर्ज्जन्ति मेघा नीलाकारा मयूराः शब्दायन्ते उच्चारावं केकामित्यर्थः, स्थाने स्थाने राजते पिंगा विद्युद्देहे कृता हारा इवाहार्य्या मेघैरिति वोद्धव्यं। नीपाः कदम्बाः फुल्ला अर्थात् मधु पिवंतो भ्रमरा दृष्टाः

जं इंदासणगण एक गणा[1] सुहायेहि[2] पाएहि पाए
ज[3] यणा[4] दहा अदह[5] सोहे सुदंडा[6] सुठाए[7] सुठाए[8] ।
दहा तिणि गुणा जहा[9] सव्वला[10] होइ[11] मत्ता सुपाए[12]
फणिंदा भणंता किलाचक्क[13] छंदो[14] णिमझाइ आए ॥
१८२[15] ॥

---

मारुतो वाति सखे मया किं कर्तव्यम् आगता [प्रावृट्] कान्तो नागत ॥ (G)

१८२। यत्रेन्द्रासनमासैकगण सुखयति पदे पदे मदर्णरहा दशभि शोभते दण्ड स्थाने स्थाने। दश त्रिगुणीकृता यथा सबला भवन्ति मात्रास्तु पादे फणीन्द्रो जल्पति क्रीडाच्छन्दो[16] जायते। एक इति गणान्तरव्यवच्छेदाय स्थाने स्थाने दण्डो लघु समीचीने स्थाने स्थाने शोभत इत्यनुपश्यते। दश त्रिगुणितास्त्रिंशन्मात्रा सबला[1] समञ्चमा। (C)

१८२। अथाष्टादशाक्षरचरणस्य वृत्तस्यैक[स्य] पञ्चाशदुत्तरशत चयमा[चतु'शता]धिकमष्टविंशतसहस्रतम भेदं [२०४५०] क्रीडाचक्र नामक वृत्त लक्षयति ज इंदासणेति। जं इंदासणा—यत्र इंद्रा

---

१८१ १ मभ्भा (C) २ सुहावेह (A) सुवेहि (B) सुहावेह (E) ३ न (A B & C) ४ रण्णा (B & C) ५ चड्ड (B & C) ६ इदसा (A) इदण्ड (B & C) सुदडा (E) ७ Dropt n (A & E) ८ सुठाए (A) सुठाए (E) ९ जहि (A) १० सवला (E & F) ११ चोलि (E) चोलि (F) १२ सुठाए (F) १३ किलाचक्र (F) १४ चदा (F) चदा (F) १५ १७८ (A)

सनं लघ्वादिर्यगण इति यावत् तदग्रे एवकारः पूरणीयस्तथा-चेंद्रासनमेवेत्यर्थः एक्क—एकः नान्यगणमिलित इति यावत् गणा—गणः पाएहि पाए—पादे पादे सु[सु]हावेइ—शोभते यत्र पादे यगणातिरिक्तो गणः न पततीत्यर्थः, सुदंडा—सु शोभना-दंडा लघवो ज[य]गणादिभूता इति भावः येषु तादृशा इत्यर्थः दहा अठ—अष्टादश वणा—वर्णा यत्र सुखए सुठाए—सुस्थाने णिवद्धाइ—निवद्धाः सोहे—शोभंते, जहा—यत्र दहा तिणि गुणा—दश त्रिगुणिताः त्रिंशदिति यावत् मत्ता—मात्राः सुपाए—सुपादे संठआ—संस्थिताः होंति—भवंति, तत् किलाचक्क छंदा—क्रीडाचक्रं छंदः जाए—जायते इति फणिंदा—फणींद्रः पिंगलः भणंता—भणति ॥ यगणषड्चितचरणं क्रीडाचक्रमिति फलितार्थः । (E).

१८२ । ज इति । यत्र इंद्रासनमेको गणः शोभते पादे पादे, यत्र वर्णा दशाष्टौ शोभंते सुदंडाः सुस्थाने सुस्थाने । दश त्रिगु-णिता यत्र संस्थिता भवंति मात्राः सुपादे, फणींद्रो भणति क्रीडा-चक्रं छंदो निवद्धं जातं ॥ इंद्रासनं यगणः, सुष्ठु शोभनाः, दंडाः लघवः । यगणेनैव सर्वे वर्णाः कार्या इत्यर्थः । (G).

१८२ । ज इंदासणा इत्यादि । यत्र इन्द्रासनमेको गणः सुखयति पादे पादे, तत्र वर्णा दशाष्ट शोभन्ते दण्डाः स्वस्थाने * * । दश त्रिगुणाः यत्र सर्वा मात्रा भवंति मात्रास्तु पादे, फणीन्द्रो भणति क्रीडाचक्रं छन्दो निर्भ्रान्तं जातं ॥ इन्द्रासनमिति आदिलघोः पञ्चकलस्य नाम यगण इत्यर्थः, तत्र वर्णा दश अष्ट वर्णानामष्टादश-

जहा,

जहा[1] भूत[2] वेताल[3] णच्चंत गावंत[4] खाए कबंधा
सिआ[5] फार[6] फेक्कार हक्का[7] रवंता[8] फुट्टे कण्ण रंधा[9] ।
काआ टुट्ट फुट्टेइ मंथा[10] कबंधा णचंता हसंता[11]
तहा वीर हम्मीर[12] संगाम मज्झे[13] तुलंता जुझंता[14] ॥
१८३[15] ॥ क्रीडाचक्र[16] ।

अथवा तेन यद्यगणा इत्यर्थः शोभन्ते दीयन्ते। इयडा लघव खलाने खलाने यत्र दश विगुणा. सकला मात्रा भवति चिशन्मात्रा पादे इत्यर्थः । एतच्छन्दो वीररसे योग्यम् । उक्तं छन्दःपारिजाते, यकारैर्यदा सन्निविष्टैरष्टैराहृतयाऽऽबन्ध, तदा क्रीडचक्रं भुजगाधिराजोऽवदत् सत्यसंध । इदं वीररसभावकाव्यानुबन्धे मनोज्ञप्रबंधं, कवीनां यशो निर्मलं संविधत्ते त्रिलोकीनिबद्धं ॥ (H).

१८३। उदाहरति। यथा भूतवेताला नृत्यन्ति गायन्ति खादन्ति कबन्धान्, शिवाफ्फारफेत्कारशब्दा. स्फोटयन्ति कर्णरन्ध्राणि। कायस्त्रुट्यति स्फुरति मस्तकं कबन्धा नृत्यन्ति हसन्ति, वीरहम्बीरः संग्राममध्ये तुलयन् ज्वलति ॥ कबन्धा प्रेतशरीराणि, हक्काशब्द उच्चैःशब्दो देशी, तुलयन् सम्पादयन् । (C)

१८३। १ जहो (A) २ भुअ (F) ३ वेआल (B) ४ गावन्त (B) ५ सिवा (A) ६ फेर (A) फाव (B & C) ७ हक्का (C) ८ रवन्ता (A) बहन्ता (B & C) ९ रन्धा (A) १० मन्ता (A), मत्था (B & C) ११ Dropt in (E) १२ हम्मीर (B & C) १३ मज्झे (E & F) १४ जुज्झंता (A), जुज्झंता (E), जुज्झन्ता (F) १५ १९८ (A) १६ क्रीडाचन्द (B & C)

आइ रग्गण हत्थ[1] काहल ताल दिज्जहु[2] मज्झआ[3]
सद्द हार पलंत विसवि[4] सव्व लोअहि[5] वुज्झिआ[6] ।
वेवि[7] काहल हार पूरहु संख कंकण सोहणा
णाअ राअ भणंत सुंदरि चच्चरी मण[8]मोहणा ॥ १८४[9] ॥

---

१८३ । क्रीडाचक्रमुदाहरति, जहा इति । जहा — यत्र कबंधा — कबन्धान् खाए — भक्षयित्वा भूत बेताल — भूता वेतालाः णच्चंत गावंत — नृत्यंति गायंति, सिआ फार फेक्कार हक्का रवंता — शिवाः स्फारफेत्कारहक्का रुवत्यः कण्ण रंधा फुल्ले — कर्णरंध्रं स्फुटंति । कआ टुट्ट — कायस्त्रुटति, मंथा — मस्तकं फुट्टेइ — स्फुटति, कबंधा णच्चंता हसंता — [कबंधाः] नृत्यंति हसंति, तहा — तत्र संगाम मज्झे — संग्राममध्ये वीर-हम्मीरः तुलंता त्वरितः सन् जुझंता — युध्यते ॥ क्रीडाचक्रं निवृत्तं । (E).

१८३ । यथा । यथा भूतवेताला नृत्यंतो गायंति खादयित्वा कबंधान् शिवाः स्फारफेत्कारहक्का रुवत्यः स्फुटंति कर्णरंध्रं । कायस्त्रुटति, मस्तकं * * कबंधा नृत्यंतो हसंति, तथा वीरः हम्मीरः संग्राममध्ये त्वरितं युध्यति[ति] ॥ (G).

१८३ । उदाह[र]णमाह, जहा भूत इत्यादि । यत्र भूताः वेताला नृत्यंति गायंति खादन्ति कबंधान्, शिवानां स्फाराः

---

१८४ । १ हत्थ (A). २ दिज्जउ (B & C), दिज्जइ (E). ३ मझ्झआ (E). मज्जआ (F). ४ इसवि (B & C). ५ लोअइ (B), लोअवि (C). ६ बुझ्झआ (E), बुज्जिआ (F). ७ देवि (E). ८ मअ (E & F). ९ १८० (A).

जहा,

पाअ[1] णेउर झंझणक्कइ[2] हंस सद्द सुसोहणा[3]
थूर[4] थोर थणग्ग णच्चइ मोत्तिदाम[5] मणोहरा ।
वाम दाहिण[6] धारि[7] धावइ तिक्ख चक्खु कढक्खआ[8]
काहु[9] णाअर[10] गेह मंडणि[11] एहु[12] सुंदरि पेक्खिआ[13] ॥
१८५[14] ॥ चर्चरी[15] ।

---

१८४ । आदीति । आदौ रगणो हस्तः काहलः तालो दीयते मध्ये शब्दहारौ पततो द्वयमपि सर्वलोकैर्बुद्धं । द्वावपि काहलौ हारं पूरय शंखकंकणं शोभनं नागराजो भणति सुंदरि चर्चरीं भण मोहिनीं ॥ हस्तः सगणः, काहलो लघुः, तालो गुरुलघुरूपो गणः, शब्दहारौ लघुगुरू द्विवारं कार्य्यौ इत्यर्थः, शंखो लघुः कंकणं गुरुः ॥ (G).

१८४ । आइ रगण इत्यादि । आदौ रगणः हस्तः काहलः तालो दातव्यो मध्ये शब्दहारौ पततः द्वावपि सर्वलोकैर्बुद्धा । द्वौ काहलौ हारं पूरय शङ्खः कङ्कणं शोभनः नागराजो भणति सुन्दरी चर्चरी मनोमोहनी ॥ आदौ रगणस्ततो हस्तः सगणस्ततः

---

१८५ । १ पाए (C). २ जंभ्रूभणक्कइ (A), झझंभणक्कइ (F). ३ सुसोहरा (A), सुसोहणा (B), सुसोहणा (E). ४ थोर (A), थूल (E & F). ५ मोत्तिमदाम (C). ६ डाहिण (B & C). ७ धाइ (B), धालि (E & F). ८ कडक्खआ (A), कलक्खआ (B & C). ९ काहि (A, B & C). १० पूरस (A, B & C). ११ मण्डिण (B & F). १२ एह (A), एहि (B & C). १३ देक्खिआ (A & F). १४ १८१ (A). १५ चाचरी (C).

काहलो लघुस्ततस्ताखो गुरुलघुरूपो मध्ये देय, शब्दहारौ लघु गुरु पतत वारदय तेन पुनरपि शब्दहारौ लघुगुरू पतत, द्वौ काहलौ लघू ततो हार गुरु पूरयत, शखो लघु तत ककण गुरु, शोभन नागराजो भणति चर्चरीच्छन्द', चर्चरी कीदृशी सुन्दरी भवत्र मनोमोहनी, अन्यापि सुदरी हारशङ्कक्रणे शोभना भजति सुदरीपद । (B)

१८५। उदाहरति। पादे नूपुर झणझणायते हसशब्दसुशोभन स्थूले विस्तीर्णस्तनाग्रे नृत्यति मौक्तिकदाम मनोहर । वामदक्षिण पार्श्वयोर्धावति तीक्ष्णचक्षु कटाक्ष कस्य नागरस्य गेहमण्डनी सुन्दरीय प्रेक्ष्यते॥ घोरशब्दो विस्तीर्णे देशी, धारशब्द' पार्श्वे, तीक्ष्णशब्दश्चक्षुर्विशेषणम् । (C)

१८५। चर्चरीमुदाहरति, पाश्र णेउरेति। हस सद्द सुसोहणा —हसशब्दवत् सुशोभन णेउर—नूपुर यस्या इति शेष यथा यथ योजनीय पाश्र—पादयो झझणक्कइ—झझणायते घोर थणग्ग—विस्तीर्णस्तनाग्रे थूल—स्थूल मणोहर—मनोहर मोत्ति दाम—मौक्तिकदाम णच्चइ—नृत्यति, तिक्खचक्खु क(डक्ख)श —तीक्ष्णचक्षु कटाक्ष बाम दाहिण—वामदक्षिणयोर्भागयोरिति भाव * * * । (E)

१८५। यथा। पादे नूपुर झझणायते हसशब्दसुशोभन स्थूल स्थूलस्तनाग्रे नृत्यति मौक्तिकदाम मनोहर । वामदक्षिणयो र्धारयोर्धावति तीक्ष्णचक्षु कटाक्ष, कस्यचिन्नागरस्य गेहमण्डिनीय सुदरी दृष्टा॥ (G)

मो सो जो[1] स त तो[2] समंत गुरवो[3] एऊण[4] विंसाउणो[5]
पिंडोअं सउ वीस[6] मत्त भणिअं अट्ठासि जोणी उणो[7]।
जं छेहत्तरि वणओ[8] चउ पओ[9] वत्तीस रेहं[10] उणो[11]
[चो]आलीसह[12] हार[13] पिंगल भणे[14] सद्दूलसट्टा[15]
मुणो ॥ १८६[16] ॥

---

१८५। उदाहरणमाह, पाअ णेउर इत्यादि। पादे नूपुरं झणझणायते हंसशब्दवत् सुशोभनं स्थूलोच्चस्तनाग्रे नृत्यति मुक्तादाम मनोहरं। वामदक्षिणयोर्धाडोर्धाडि लोके प्रसिद्धं * * तीक्ष्णचक्षुः-कटाक्षः, कस्य पुरुषस्य गेहमण्डनकर्त्रीयं सुंदरी दृष्टा ॥ (H).

[In MS. (H), a metre named मुक्ताहारः is transcribed with an example from another book. As this has not been mentioned in any of the other MSS, so it has not been adopted here.—Ed.]

१८६। अथोनविंशत्यक्षरा। मो ऽऽऽ सो ।।ऽ जो ।ऽ। स ।।ऽ त ऽऽ। अस्य द्वयं तदन्ते गुरुः एकोनविंशतिर्वर्णाः पिण्डोऽयं विंशत्यधिकशतं मात्राणां भणितम् अष्टाशीतियोनिः पुनः। यत्

---

१८६। १ जे (B). २ ता (A, B & C). ३ गुरश्चो (A), गुणश्चो (B & C). ४ एउण (A), एऊण (F). ५ विंसावणो (E & F). ६ विंस (F). ७ जो णिष्पुणो (A), यो णीपुणो (B & C). ८ वणणो (A, B & C). ९ पश्चा (A). १० रेहा (A), रेहे (E). ११ जुणो (A), पुणो (B & C). १२ एश्चालीसह (A & B), चौश्चालीसह (C & E), चौवालीसह (F). १३ णाम (A, B & C). १४ कई (A, B & C). १५ सद्दूल सो सट्टश्चो (A). १६ १८२ (A).

काहलो लघुस्ततश्चालो गुरुलघुरूपो मध्ये देय, शब्दहारौ लघु गुरु पतत धारद्वय तेन पुनरपि शब्दहारौ लघुगुरू पतत, द्वौ काहलौ लघू ततो हार गुरु पूरयत, शल्यो लघु तत कङ्कण गुरु, शोभन नागराजो भणति चर्चरीच्छन्द, चर्चरी कीदृशी सुन्दरी भवत्य मनोमोहनी, अन्यापि सुदरी हारशङ्खकङ्कणे शोभना भजति सुदरीपद । (H).

१८६। उदाहरति। पादे नूपुर झणझणायते हंसशब्दसुशोभन स्थूले विस्तीर्णस्तनाये नृत्यति मौक्तिकदाम मनोहर । वामदक्षिण पार्श्वयोर्धावति तीक्ष्णचक्षु कटाक्ष, कस्य नागरस्य गेहमण्डनी सुन्दरीय प्रेक्ष्यते ॥ थोरशब्दो विस्तीर्णे देशी, धारशब्द पार्श्व तीक्ष्णशब्दयक्षुर्विशेषणम् । (C).

१८५। चर्चरीमुदाहरति, पाअ णेउरेति। हस सद सुशोहणा —हसशब्दवत् सुशोभन णेउर—नूपुर यस्या इति शेष यथा यथ योजनीय पाअ—पादयो झणक्कइ—झणझणायते, थोर थणग्ग—विस्तीर्णस्तनाग्रे णच्च—नृत्यति मणोहर—मनोहर मोत्ति दाम—मौक्तिकदाम णच्चइ—नृत्यति, तिक्खचक्खु कडिक्ख वा —तीक्ष्णचक्षुकटाक्ष वाम दाहिण—वामदक्षिणयोर्भागयोरिति भाव * * * । (E)

१८५। यथा। पादे नूपुर झणझणायते हंसशब्दसुशोभन स्थूल स्थूलस्तनाये नृत्यति मौक्तिकदाम मनोहर । वामदक्षिणयो-धारयोर्धावति तीक्ष्णचक्षु कटाक्ष, कस्यचिन्नागरस्य गेहमण्डिनीय सुदरी दृष्टा ॥ (G)

१८६। अथैकोनविंशत्यक्षरा अतिधृतिः॥ मो मो इति॥ म म ज स त ताः सम्तगुरवः एकोनविंशतिर्वर्णाः पिंडीभूताः शतं विंशतिर्मात्रा भणिता अष्टाशीतियोनयः पुनः। यत् षट्सप्ततिवर्णा-श्चतुःपदेषु द्वात्रिंशद्रेखं पुनश्चतुश्चत्वारिंशत् हारः पिंगलभणितं शार्दूलशाटकं जानीहि॥ हारो गुरुरंते कार्य इत्यर्थः, अष्टाशीति-रिति गुरुमात्रापरं। (G).

१८६। ऊनविंशत्यक्षरप्रस्तारस्य कतिचित् छंदांसि वदति मो सो जो इत्यादि। मः सः जः सतताः समंतगुरुका एकोन-विंशतिः पुनः पिण्डोऽयं शतं विंशतिर्मात्रा भणिता अष्टाशीति-र्योनिः पुनः। यत्र षट्सप्ततिर्वर्णाश्चतुःपदेषु द्वात्रिंशद्रेखाः प्राप्ता-एकचत्वारिंशन्नाम पिंगलकवेः शार्दूलशाटको ज्ञातः॥ मो मगणः, सः सगणः, जो जगणः, सः सगणः, तस्तगणः, पुनस्तस्तगणः, सम-न्तगुरवः अन्ते गुरुर्येषां ते तथा. सतता एकोनविंशतिर्वर्णाः पदे अस्य छंदसः सकलशरीरं विंशत्यधिकशतं मात्राः पिण्डः शरीरं, तत्रापि भागमाह योनिरष्टाशीतिः, योनिर्जन्मस्थानं कलाद्वयेन गुरुरेकश्चतुश्चत्वारिंशद्गुरूणामष्टाशीतिः कला योनिरुत्पत्तिस्थानं चतुर्भिः पदैः षट्सप्ततिवर्णाश्चतुर्षु पदेषु द्वात्रिंशल्लघवः। एवं गण-वर्णमात्रालघूनि कथयित्वा पारिशेष्याद्गुरुसंख्यां कथयति, एक-चत्वारिंशन्नामसंख्यकाश्च गुरवो भवंति, कवेः पिंगलस्य नाम पिंगल-इत्यक्षरत्रयम् एकचत्वारिंशत् त्रयश्च तेन चतुश्चत्वारिंशद्गुरवो भवंति यत्र तत् शार्दूलशाटकं ज्ञातं। (H).

१८६। अथैकोनविंशत्यक्षरा अतिधृतिः॥ मो सौ इति॥ म स ज स त ताः समंतगुरवः एकोनविंशतिर्वर्णाः पिंडीभूताः शतं विंशतिर्मात्रा भणिता अष्टाशीतिर्योनयः पुनः। यत् षट्सप्ततिवर्णाश्चतुःपदेषु द्वात्रिंशद्रेखं पुनश्चतुश्चत्वारिंशत् हारः पिंगलभणितं शार्दूलशाटकं जानीहि॥ हारो गुरुरंते कार्य इत्यर्थः, अष्टाशीतिरिति गुरुमात्रापरं। (G).

१८६। ऊनविंशत्यक्षरप्रस्तारस्य कतिचित् छंदांसि वदति मो सो जो इत्यादि। मः सः जः सतताः समंतगुरुका एकोनविंशतिः पुनः पिण्डोऽयं शतं विंशतिर्मात्रा भणिता अष्टाशीतिर्योनिः पुनः। यत्र षट्सप्ततिर्वर्णाश्चतुःपदेषु द्वात्रिंशद्रेखाः प्राप्ता एकचत्वारिंशन्नाम पिंगलकवेः शार्दूलशाटको ज्ञातः॥ मो मगणः, सः सगणः, जो जगणः, सः सगणः, तस्तगणः, पुनस्तस्तगणः, समन्तगुरवः अन्ते गुरुर्येषां ते तथा सतता एकोनविंशतिर्वर्णाः पदे अस्य छंदसः सकलशरीरं विंशत्यधिकशतं मात्राः पिण्डः शरीरं, तत्रापि भागमाह योनिरष्टाशीतिः, योनिर्जन्मस्थानं कलाद्वयेन गुरुरेकश्चतुश्चत्वारिंशद्गुरूणामष्टाशीतिः कला योनिरुत्पत्तिस्थानं चतुर्भिः पदैः षट्सप्ततिवर्णाश्चतुर्षु पदेषु द्वात्रिंशल्लघवः। एवं गणवर्णमात्रालघूनि कथयित्वा पारिशेष्याद्गुरुसंख्यां कथयति, एकचत्वारिंशन्नामसंख्यकाश्च गुरवो भवंति, कवेः पिंगलस्य नाम पिंगल इत्यक्षरत्रयम् एकचत्वारिंशत् त्रयश्च तेन चतुश्चत्वारिंशद्गुरवो भवंति यत्र तत् शार्दूलशाटकं ज्ञातं। (H).

अहा,

जे लंका[1] गिरि मेहलाहि[2] खलिआ[3] संभोअ खिणो[4]रई
फारुप्फुल्ल[5] फणावली कवलणे[6] पत्ता दरिद्दत्तणं[7] ।
ते एम्हिं[8] मलआणिला विरहिणी णीसास[9] संपक्किणो
जादा झत्ति सिसुत्तणे वि बहला[10] तारुण्ण पुण्णा विश्र[11] ॥
१८७[12] ॥ साद्दूलसट्ट । (C)

१८७ । उदाहरति । ये लङ्कागिरिमेखलायाः स्खलिताः सम्भोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलनेन प्राप्ता दरिद्रत्वम् । इदानीं ते मलयानिला विरहिणीनिश्वाससम्पर्किणो जाता शैशवे मिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥ (C)

१८७ । शार्दूलशाटकमुदाहरति, जे लङ्केति । जे — ये लंका गिरि मेहलाहि — लङ्कागिरिमेखलाया त्रिकूटाचलकटकादित्यर्थं खलिआ — स्खलिता सतय सम्भोगखिन्नोरगीस्फारोत्फुल्लफणावली-कवलनेन दरिद्दत्तण — दरिद्रत्व पत्ता — प्राप्ता । ते एम्हि — इदानीं मलयानिला विरहिणीनिश्वाससम्पर्किण सत शिशुत्वेऽपि तारुण्यपूर्णा इव बहला जाता ॥ कर्पूरमञ्जरीनाटके देवीनियुक्त-विचक्षणाया वाक्यमेतत् । (E)

१८७ । १ वे लङ्का (B) २ मेहलाहु (A) मेहलाइ (B & C) ३ खलीआ (F) ४ खिणो (A) ५ फारफुल्ल (A) फारफुल्ल (B & C) फारफुल (E) ६ फणावलले (C) ७ दरिद्दत्तण (B) ८ एत्तहि (B & C) एम्हि (E) ९ णीसा (B) णिसास (E) १० बहुला (B & C) ११ पुणा विश (A & C) १२ १८६ (A)

पत्थारे[1] जह[2] तिसि[3] चामर वरं दीसंति वण्णुज्जलं[4]
उक्किट्ठं[5] लहु विसि[6] चामर तहा उट्ठीअ[7] गंधुग्गुरो[8] ।
तिणो[9] दिस[10] सुगंध[11] चामर तहा गंधा जुआ[12] चामरं
रेहंतो[13] धअपट्ट[14] अंत कहिअं[15] सद्दूल विक्कीडिअं[16] ॥
१८८[17] ॥

१८७। यथा। ये लंकागिरिमेखलाभ्यः स्खलिताः संभोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलनैः प्राप्ता दरिद्रत्वं। ते इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो जाता झटिति शिशुत्वेऽपि बहुलास्तारुण्यपूर्णा इव ॥ (G).

१८७। उदाहरणमाह, जे लङ्का इत्यादि। ये लङ्कागिरिमेखलातः स्खलिताः संभोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वं। ते इदानीं मदनाविना [?] विरहिणीनिःश्वाससंपर्किणो जाता झटिति शिशुत्वेऽपि बहुलास्तारुण्यपूर्णा इव ॥ (H).

१८८। अमुमेवार्थं प्रकारान्तरेण स्पष्टयति, पत्थारे इति। प्रस्तारय त्रीणि चामराणि दृश्यन्ते वर्णोज्ज्वलानि, उत्थापनीयौ

१८८। १ पच्छारे (A). २ तह (A), जइ (B & C). ३ तिष (A). ४ वण्णुज्जलं (E), वण्णुज्जलं (F). ५ तद्देयं (A & B), उट्ठेयं (C). ६ विषि (A). ७ तद्देय (A & B), उट्ठेय (C). ८ गंधंगुरो (B & C), गंधुग्गुरो (E). ९ तिष्णे (A & B), तिषि (C). १० दुष (B & C). ११ सुगंध (E). १२ जवे (A & C), जवे (B). १३ देरं (F). १४ धअवट्ट (A), जअपट्ट (B), थपट्ट (C). १५ करणे (A, B & C). १६ सट्टा सुणो (A), सद्दा सुणे (B & C). १७ १८४ (A).

लघू द्वौ चामर तथा उत्थाप्यौ गन्धगुरू । चयो दीयन्तां सुगन्धा चामराणि तथा गन्धश्च द्वे चामरे राजमानो ध्वजपटोऽन्ते कथित शार्दूलवृत्तापने ॥ सट्टो सुणे इति पाठे शार्दूलशब्दको ज्ञायत इत्यर्थः, स[प्र]स्तारय विस्तारय, सुगन्धाः शोभना गन्धा लघवस्तथा चौणि गुरूणि, ध्वजपट आदिलघुस्त्रिकल । (C)

१८८। पुनरपि शार्दूलविक्रीडित प्रकारान्तरेण लक्षयति, पत्थारे इति । जइ—यत्र पत्थारे—प्रस्तारे वणुज्जल—वर्णोज्ज्वलानि तिण्णि चामर वर—चीणि चामरवराणि गुरूणि दीयन्ते—दृश्यन्ते, ततश्च थक्किड़—चलाइ लड विणि—लघुद्वय चामर—चमर गुरुरित्यर्थ तहा—तथा गधुगुरो—गधो लघु गुरुश्च उट्ठीच—उत्थापित दत्त इत्यर्थ । तहा—तथा तिणो चयस्त्रीणि वा सु[सु]गध—सुगधा शोभना लघव इत्यर्थ चामर—चामराणि गुरव दिज्ज—दीयते, ततश्च गधा—गधो लघु जुआ चामर—द्वे चामरे गुरू अत—अन्ते पादान्ते चामरद्वयान्ते वेत्यर्थ रेहतो—राजमान धअपट्ट—ध्वजपटो लघ्वादिस्त्रिकल इति यावत् कहिअ—कथित सदूल विक्कीडिअ—शार्दूलविक्रीडित ॥ (E)

१८८। पत्थार इति । प्रस्तारे यत्र त्रय चामरवरा दृश्यन्ते वर्णोज्ज्वलस्तुलाद्य लघुद्वय चामर तयोत्थापितो गधो गुरु । त्रयो दत्ता सुगधाश्चामरास्तथा गधो युग्मचामर राजमानो ध्वजपटोऽन्ते कथित शार्दूलविक्रीडित ॥ चामर गुरु, गधो लघु, ध्वजपटो लघुगुरू । मन्नान्तरार्थं पुनरुक्ति । (G)

१८८। पूर्वोक्तलक्षणमेव प्रकारान्तरेण सुगमलक्षण करोति,

जहा,

जं धोअंजण लोल[1] लोअणजुअं लंबाल[2]अग्गं मुहं
हत्या[3]लंबिअ केस पल्लव[4]चए घोणंति[5] जं विंदुणो[6] ।
जं एक्कं सिअअं[7]चलं[8] णिवसिदं[9] तं णहाण[10] केलिठ्ठिआ[11]
आणीदा इअ मज्झ[12]देक्क जणणी जोईसरेणा[13]मुणा ॥
१८९[14] ॥ शार्दूलस्य लक्षणद्वयमेतत् । (A). सद्दूल (B & C).

---

पत्थारे इत्यादि । प्रस्तारे तत्र त्रयस्त्रामरवरा दृश्यंते वर्णोज्ज्वलं तथा चैवं लघुद्वयं चामरं तथा चैव गंधो गुरुः । त्रयो दत्ताः सुगंधाः चामराणि तथा गन्धस्य द्वे चामरे शोभमानो ध्वजपटोऽन्तकरणे शार्द्दूलशाटको ज्ञातः ॥ प्रस्तारे त्रीणि चामराणि गुरवस्ततो वर्णोज्ज्वलं यथा स्यादेवं लघुद्वयं कर्त्तव्यं तथाच चामरं गुरुस्तथाच गन्धो लघुस्ततो गुरुस्ततस्त्रयः सुगन्धा लघवः तथैव चामराणि त्रीणि गुरव इत्यर्थः ततो गन्धस्य लघुस्ततो द्वे चामरे गुरुद्वयमन्तकरणेऽन्ते शोभनध्वजपटस्त्रिकलो लघुगुरुरूपः, शार्द्दूलशाटकमिति छंदसो नाम । अत्र द्वादशवर्णेषु यतिः, सप्तसु वर्णेषु यतिः, क्वचिदादौ सप्तसु वर्णेषु यतिः ततो द्वादशसु वर्णेषु यतिः ।

---

१८९ । १ धोण (A, B & C). २ लंबाण (B). ३ हच्छा (A). ४ पल्लव (A). ५ धोलन्ति (A), दोरंति (B), दोलन्ति (C). ६ भिङ्गाङ्गणा (C). ७ सिचयं (A, B & C). ८ चञ्चलं (B & C). ९ णिवासियं (F). १० तं ण्हाण (A), तन्हाण (B), तण्हाण (C). ११ केलिट्ठिदा (B & C). १२ मज्भ (B & C). १३ जोइसरेणा (A, C & E). १४ १८५ (A).

चक्र छद पारिजाते म सो ज सतता गुरुश्च विरति सूर्यै-रश्वैर्भवत्, नागानामधिपेन तन्निगदितं शार्दूलविक्रीडितम्। एतत्प्राकृतकाव्यनिर्मितिविधौ सङ्कीर्त्यते प्राकृत विच्छेदः क्वचिदत्र यमादिनश्छन्दस्यस्मिन्नपि मन्यते ॥ (II)

१८८। उदाहरति। यद्धौताञ्जनशोणलोचनयुगं लग्नाधरं मुखं हस्तालम्बितकेशपल्लवचयैर्घूर्णन्ति धूर्णाङ्गना। यद्देक सिच-याञ्चल निबधित तत् ध्यानकेलिस्थिता आनीता इयमद्भुतैकजननी योगीश्वरेणात्मना ॥ इदं कर्पूरमञ्जर्यां भैरवानन्दयोगिकृताह नायिकावर्णनं। (C)

१८८। शार्दूलविक्रीडितमुदाहरति, जमिति। ज धौदञ्जण लोल लोअण जुअ — यस्मात् धौताञ्जनलोललोचनयुगं धौतमञ्जनं यस्य तादृशं लोचनयुगं यस्मिंस्तादृशमित्यर्थः लग्गालक्त— लग्नालक्तकाः लग्नान्यलक्तकान्यपि यस्य तत्तादृशं मुह — मुखमित्यर्थः तथा ज — यत् हत्थालम्बिअ केस पल्लव चए — हस्तालम्बितकेशपल्लवचये विदुणी — विद्वयो घोणति — घूर्णन्ति परितो भ्रमन्तीति यावत्। तथा ज — यस्मात् एक्क सिचअम्बर णिवसिअ — एक सिचयाम्बर निवसित यत्वाऽकेलिस्थिता त — तस्मात् हेतो ध्यानकेलिस्थिता अच्चब्भुअ जणणी — अद्भुतैकजननी आश्चर्यमुत्पत्तिभूमिरिति यावत् इअ — इयं कर्पूरमञ्जरी अमुना जोईसरेण — योगी-श्वरेण कापालिकभैरवानन्देन आणीदा — आनीता ॥ यतो नेत्रलो-रञ्जन धौत विद्वय केश्या, स्रोत्स्यतीति एकमेव च वस्त्र धृतं, तत ध्यानव्यवच्छेदमानीतेत्यर्थः। भैरवानन्दाहृता कर्पूरमञ्जरी

प्रेक्ष्य विदूषकं प्रति राज्ञो वाक्यमेतत्। शार्दूलविक्रीडितं निवृत्तं। (E).

१८८। यथा। यद्धौतांजनशोणलोचनयुगं लंबालकाग्रं मुखं हस्तालंबिनि केशपल्लवचये घूर्णंति यद्विंदवः। यदेकमिचयांचलं निवसितं तत्स्नानकेलिस्थिता आनीता इयमद्भुतैकजननी योगीश्वरेणामुना॥ (G).

१८८। उदाहरणमाह, जं धोअं इत्यादि। यस्याः धौताञ्जन-शोणलोचनयुगं लम्बालकाग्रं मुखं हस्तालम्बितकेशपल्लव[च]ये घूर्णन्ते यत्र विंदवः। यथैकं सिचयाञ्चलं निवसितं तत्स्नानकेलि-स्थिता आनीता इयमद्भुतैकजननी योगीश्वरेणामुना॥ सिचयः परिधानवस्त्रं। सिचयः प्रोतमाटक इति त्रिकाण्डशेषः। भैरवा-नंदाकृष्टायाः स्नानस्थितायाः कर्पूरमञ्जर्य्या वर्णनं। (H).

[Note.—The following verses are found in MS. (A), but in none of the others.—Ed.]

इह बंभण इह खत्तिअउ इह वेसउ इह सुद्द।
वर्णाँ पर तह एक्क अउ माला जाति पसिद्ध॥ १८६॥ [दोहा]
तिह्ल पाए उणविंस अक्खर धरो एकेण वीहं सुणो
मत्ताणं सउ वीह १२० पिंड मअले तेत्तार हारं पुणो।
गंधोअं चउतीस ३४ छंद सअलँ सेसेण सुज्झाणिओ
वण्णेणं सतहत्तरेहिँ [७७] भणिअं गुंजाण सो सद्दओ॥ १८७॥
विह पाए विह कण्ण सेस भणिअं एउण वीसं धरो
वि[अ]चालीसह [४२] हार अच्छि मअले छत्तीस रेहा भ[ध]रो।

